श्रीः ।

# श्रीनरनारायणीयं काव्यम् ।

श्रीसदानन्दसूनुवाणीविलासकृतया दिग्दर्शि-
नीसमाख्यया व्याख्यया समलंकृतम् ।

श्रीकृष्णदासात्मज-गंगाविष्णोः

स्वकीये "लक्ष्मीवेंकटेश्वर" मुद्रणालये

ग्रन्थकर्त्रर्थं मुद्रयित्वा प्रकाशितम् ।

शकाब्दाः १८४०, संवत् १९७५.

कल्याण-मुंबई.

॥ श्रीः ॥

गढवालदेशान्तःपातितिमलीग्रामनिवासिपण्डित-
श्रीदामोदरसूनुदेवप्रयागीयश्रीरघुनाथकीर्ति-
महाविद्यालयप्रधानाध्यापकश्रीगुरुपादार-
विन्दप्रसादसिद्धकविसदानन्दप्रणीतम् ।

# श्रीनरनारायणीयं काव्यम्.

---

श्रीसदानन्दसूनुवाणीविलासकृतया दिग्दर्शिनी-
समाख्यया व्याख्यया समलंकृतम् ।

---

तदेव

श्रीकृष्णदासात्मजेन-गंगाविष्णोः
स्वकीये "लक्ष्मीवेङ्कटेश्वर" मुद्रणालये
मैनेजर पं० शिवदुलारेवाजपेयीत्यनेन ग्रन्थकर्त्रर्थं
मुद्रयित्वा प्रकाशितम् ।

---

शकाब्दाः १८४०, संवत् १९७५.

कल्याण-मुंबई.

---

# भूमिका।

यह "नरनारायणीय" नामक नवीन काव्य ब्रह्मवैवर्त आदि प्राच्य पुराणग्रन्थोंके इतिहासके आधारपर प्रायः प्राच्यशैलीके अनुसारही रचा गया है। सहृदय सज्जनोंके मनोरञ्जनार्थ अनेक रोचक छन्द भी इसमें दिये गये हैं, यदि निर्मत्सर सज्जन महात्माओंने इसे अपनी परमरम्य स्निग्ध दृष्टिसे देखा तो निःसन्देह मेरा यह काव्य परम गौरवका आस्पद बन सकता है। और इसीमें मेरे अविश्रान्त परिश्रमका साफल्य भी निर्भर है। इस कठिन समयमें व्ययाधिक्यकी आशङ्कासे भाषाटीकासहित न छपा सका इसके लिये क्षमाप्रार्थी हूं।

जिस प्रकार श्रीमान् महन्त परशुरामजी हृषीकेश, तथा श्रीमान् रामनाथजी महोदय, श्रीमान् पं० घनानन्दजी खंडडी मालदार श्रीनगर श्रीमान् रामविलास सुखदयालजी सेठ रतनगढवाले, श्रीमान् पं० वामदेवजी मिश्र रतनगढ, श्रीमान् पं० देवीप्रसादजी भाष्याचार्य्य जगाधरीवाले, श्रीमान् यमुनाधरजी मन्त्री व सागरमलजी मन्त्री चूरूवाले, श्रीमान् पण्डित शिवलालजी हिंसारवाले, श्रीमान् सादीरामजी ब्रह्मचारी हृषीकेश इन महोदयोंने इस काव्यकी सहायतामें परमादरके साथ सहानुभूति तथा स्वदेशविद्याप्रेम और गुणग्राहिता दर्शायी है। यदि ऐसेही अन्यान्य विद्यानुरागी सज्जनोंकी भी सुदृष्टि रही तो दूसरे संस्करणमें इस ग्रन्थकी भाषाटीकासहित छप जानेमें कोई सन्देह नहीं। मैं आशा करता हूं कि, मेरा यह प्रबन्ध जैसे २ सज्जनोंकी दृष्टिके समीप पडेगा वैसेही पुष्पित फलित बनकर जगत्के सुखास्पद बनेगा। यदि इसमें मानवधर्मानुसार कोई बालदोष रह गये हों तो सूक्ष्मदर्शी सज्जनोंके हाथसे दूधकी तरह छन सकता है॥

निवेदक-ग्रन्थकर्ता सदानन्दशर्म्मा,
काव्यतीर्थ प्रधानाध्यापक श्रीरघुनाथकीर्ति-
पाठशाला देवप्रयाग निवासी तिमली
पट्टी डबरालस्यूं (गढवाल)

श्रीः ॥

अथ

# नरनारायणीयं काव्यम् ।

## दिग्दर्शिनीसमाख्यया व्याख्यया समलङ्कृतम् ।

## प्रथमः सर्गः ।

ऐश्वर्यपीयूषरसाप्लुताङ्गौ
ह्रीमण्डनामूर्तिरसूत सूनू ।
श्रीधर्मपत्नी परमेश्वरांशा-
वृषी जगन्मङ्गलमूलमूर्ती ॥ १ ॥

श्रिया विमलयोज्ज्वलं सकलसौख्यसम्पादकम्
स्वमानससरोवरे विकसितं मरालो यथा ।
रसैश्च मकरन्दितं किल चतुर्भिरेवाऽक्षरै-
रहर्निशमहं भजे गुरुपदारविन्दद्वयम् ॥

अथ तावद्ग्रन्थकारा निर्विघ्नपरिसमाप्त्यर्थं काव्यबीजभूतं मङ्गलं वस्तु निर्दिशन्ति–' ऐश्वर्येति । ह्रीर्लज्जा ' मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा ' इत्यमरः । सैव मण्डनं भूषणं यस्याः सा तथोक्ता । श्रीयुक्तो धर्मः श्रीधर्मः प्रजापतिविशेषः । शाकपार्थिवादित्वा-त्साधुत्वम् । तस्य या पत्नी जाया मूर्तिस्तदाख्या कर्त्री । परमश्चाऽसावीश्वरः सर्वशक्तिमान् तस्यांशौ अंशभूतौ अतएव ऐश्वर्यं अचिन्तनीयप्रभावः तदेव पीयूषरसः सुधारसः । ' पीयूषममृतं सुधा ' इत्यमरः । तेन आप्लुतं आर्द्रं अङ्गं ययोस्तौ तथोक्तौ । जगन्मङ्गलानां मूलं बीजभूता मूर्तिस्तनुर्ययोस्तौ । ऋषी

आदिमुनी नरनारायणाख्यौ सूनू पुत्रौ । 'सूनुः पुत्रेऽनुजे रवौ' इति विश्वः । तौ कर्मपदम् । असूत उत्पादयामास । अस्मिन् सर्गे उपजातिवृत्तम् ॥ १ ॥

परमेश्वरांशाविति यदाह तदेव द्रढयति-

पर्य्यस्करोद्भास्करभासुराभम्
हिरण्मयं हारि किरीटरत्नम् ।
यकं जटामण्डलमण्डितेन
तेनाऽद्य भान्तौ मुदिरेण मूर्ध्ना ॥ २ ॥

भास्करः सूर्य्यः । 'भास्कराहस्करब्रध्नप्रभाकरविभाकराः ।' इत्यमरः । दिवाविभानिशेति टच्प्रत्ययः समासान्तः । तस्यैव भासुरा विकस्वरा आभा कान्तिर्यस्य तत्तथोक्तम् । 'भञ्जभासभिदो घुरच्' इति घुरच्प्रत्ययः । हिरण्मयं स्वर्णप्रचुरम् । दाण्डिनायनेत्यादिना निपातः । हारिमनोहरं किरीटरत्नं कर्तृ । यकं यं मूर्धानम् । 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच् प्रत्ययः । पर्य्यस्करोदभूषयत् । 'सम्परिभ्यां करोतौ भूषणे सुट्' इति सुट् । अद्याऽस्मिन्नार्षेऽवतारे जटामण्डलमण्डितेनाऽतएव मुदिरेण मेवाकारेण । 'घनजीमूतमुदिर-' इत्यमरः । तेनैवंविधेन मूर्ध्ना शिरसा भान्तौ भ्राजमानौ । महात्मानो हि लोकोपकारकृते महतीमपि सौख्यसामग्रीं त्यजन्तीति भावः ॥ २ ॥

कर्पूरगौरीं स्फटिकाक्षमालां
करेण रक्तोत्पलविभ्रमेण ।
नखांशुभिर्विच्छुरितां वहन्तौ
साक्षात्तपःसिद्धिमिव स्फुरन्तीम् ॥ ३ ॥

रक्तोत्पलविभ्रमेण कोकनदानुकारिणा करेण दक्षिणहस्तेन कर्पूरगौरीं कर्पूरवच्छुभ्राम् । 'षिद्गौरादिभ्यश्च' इति ङीष् ।

किञ्च नखांशुभिर्नखकिरणैः विच्छुरितां रुषितां स्फाटिकाक्षमालां साक्षात् प्रत्यक्षं स्फुरन्तीं तपःसिद्धिमिव वहन्तौ बिभ्राणौ । सागरान्तभूसाम्राज्यलक्षणसम्पन्नावपि तपः कर्तुं प्रवृत्ताविति भावः । उत्प्रेक्षेयम् ॥ ३ ॥

कमण्डलुं सम्भृततीर्थनीर-
मन्येन पद्माकरलालितेन ।
प्राक्सञ्चितानां तपसामिवैकं
निधानमाभासुरमादधानौ ॥ ४ ॥

पद्माकरलालितेन लक्ष्मीस्वहस्तलालितेन अन्येन द्वितीयेन हस्तेन करणेन सम्भृततीर्थनीरं सञ्चिततीर्थजलं कमण्डलुं कुण्डीं प्राक्सञ्चितानां पूर्वोपार्जितानां तपसां एकं मुख्यम् । 'एके मुख्यान्यकेवलाः' इत्यमरः । आभासुरं भास्वरं निधानं निधिमिवेत्युत्प्रेक्षा । आदधानौ धारयन्तौ ॥ ४ ॥

यस्मिन्नरज्यन्त दिशो विलग्ना
दृशो हि गोलोकसदां सदैव ।
त्रैलोक्यलक्ष्मीनिलये वसानौ
तस्मिञ्छरीरे रुरुचर्म शुष्कम् ॥ ५ ॥

गोलोकसदां गोलोकवासिनां दृशो दृष्टयः त्रैलोक्यलक्ष्मीनिलये त्रैलोक्यशोभास्पदे यस्मिन् पौरुषे शरीरे दिशः दिशं विहाय विलग्ना सत्यः । ल्यब्लोपे पञ्चमीयम् । सदैव नित्यमेवाऽरज्यन्ताऽनुरक्ता बभूवुः । अद्य तस्मिन्नेव तथाविधे शरीरे शुष्कं रुरुचर्म रौरवीं त्वचं वसानौ परिदधानौ ॥ ५ ॥

कर्बूरपिङ्गेन दुकूलयुग्मे-
नाऽत्यर्थमेवाऽलमकारि योऽसौ ।

तस्मिन् दधानौ जगदेकधीरौ
कौपीनमापीनकटिप्रदेशे ॥ ६ ॥

योऽसौ पौरुषः कटिप्रदेशः पूर्वं कर्चूरपिङ्गेन हरितालपिशङ्गेन दुकूलयुग्मेन कौशेयाम्बरयुग्मेनाऽत्यर्थमतितरामेवाऽलमकारि अलङ्कृतः। कर्मणि लुङ्। तस्मिन् तथोचिते आपीनकटिप्रदेशे ईषत्पीनकटिप्रदेशे। 'आङीषदर्थेऽभिव्याप्तौ' इति कोशः। कौपीनम् अल्पमात्रमाच्छादनं दधानौ वहन्तौ अतएव जगदेकधीरौ ॥ ६ ॥

सँल्लालयामास निधाय नित्यं
यमिन्दिरेन्दीवरसुन्दराभम्।
वक्षःस्थले दारवपादुकाया-
मारोपयन्तौ तमुदारपादम् ॥ ७ ॥

इन्दिरा लक्ष्मीः। 'इन्दिरा लोकमाता मा क्षीरोदतनया रमा।' इत्यमरः। इन्दीवरं नीलकमलम्। 'इन्दीवरं च नीलेऽस्मिन्' इत्यमरः। तस्येव सुन्दरी आभा कान्तिर्यस्य तम्। एवंविधं यं पौरुषमुदारपादम्। उदारशब्देन सुखदुःखसमत्वं सूच्यते। नित्यं वक्षःस्थले उरस्स्थले निधाय आरोप्य सँल्लालयामास लालितवती। अद्य तं पादं दारवी काष्ठमयी चासौ पादुका तस्यामारोपयन्तौ स्थापयन्तौ ॥ ७ ॥

विधित्सयाऽमानवमानमारा-
दात्मानमाराध्य तपोभिरुग्रैः।
परोपकारैकरसैर्हि गण्यं
सुखं नु दुःखं किमिति ब्रुवन्तौ ॥ ८ ॥

उग्रैर्भयङ्करैस्तपोभिः करणैः अमानवमानम् आत्मानं ज्ञानाधिकरणं आराध्य आरात् शीघ्रमेव [illegible] विधित्सया दानवहननरूप देव-

कार्य्यम् विधातुमिच्छया करणेन इतीत्थं ब्रुवन्तौ सूचयन्तौ । किमिति । हि परोपकारैकरसैः पुरुषैः किं नु सुखं गण्यं किं नु दुःखं गण्यं किमपि न गणनीयमित्यर्थः ॥ ८ ॥

तप्तुं तपो दुश्चरमार्षवृत्ती
सम्प्रस्थितौ वीक्ष्य सुतौ विशालाम् ।
माताऽब्रवीद्बाष्पनिरुद्धकण्ठ-
मुत्कण्ठया मोहविमुग्धबुद्धिः ॥ ९ ॥

अथ आर्षी ऋषिजनोचिता वृत्तिराचारो ययोस्तौ तथोक्तौ सुतौ पुत्रौ नरनारायणौ दुश्चरं दुष्करम् । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल्प्रत्ययः । तपस्तप्तुं विशालां बदरीविशालां प्रति सम्प्रस्थितौ प्रचलितौ वीक्ष्य दृष्ट्वा मोहेन पुत्रस्नेहकातरताजन्येनाऽज्ञानेन विमुग्धा विमूढा बुद्धिर्यस्याः सा तथोक्ता माता मूर्तिः कर्त्री । उत्कण्ठया उत्कलिकया हेतुना । 'उत्कण्ठोत्कलिके समे' इत्यमरः । बाष्पैरन्तःस्तम्भिताश्रुभिः निरुद्धः कण्ठो यस्मिन् कर्मणि तद्यथा स्यात्तथा क्रियाविशेषणमिदम् । अब्रवीत् अकथयत् । ब्रुञो लङ् ॥ ९ ॥

किमब्रवीदित्याह—

वचो गुरूणां परिणामरम्य-
मारम्भसम्भावितभूरिभारम् ।
तापापहं पेयमिवौषधं वो
भिषक्तमानामनुवेलमेव ॥ १० ॥

आरम्भे श्रवणपानारम्भे सम्भावितः संलक्षितो भूरिभारो महादुर्भरता यस्य तत् किञ्च तापान् दुःखानि अपहन्तीति तथाविधं अतएव परिणामरम्यं स्वन्तं गुरूणां श्रेष्ठजनानां वचो वचनं भिषक्तमानां वैद्यवराणाम् । 'भिषग्वैद्यौ चिकित्सके'

इत्यमरः । औषधमिवाऽनुवेलं वेलायां वेलायामित्यनुवेलं प्रतिक्षणमेव । "अव्ययम्-" इत्यादिना वीप्सायामव्ययीभावः । पेयं पातुं योग्यं सादरं श्रवणीयमित्यर्थः । यदहं ब्रवीमि तद्भवद्भिः सादरं श्रोतव्यमिति तात्पर्यम् । उपमालङ्कारः । 'उपमा यत्र साहश्यलक्ष्मीरुल्लसति द्वयोः ।' इति लक्षणात् ॥ १० ॥

एकाकिनोर्वां क उपप्लुवेभ्यः
पिशाचयक्षोरगराक्षसेभ्यः ।
बोभूयिता तत्र तदन्यहिंस्रा-
त्राता फले दुष्प्रगमे हि गृध्न्वोः ॥ ११ ॥

हि दुष्प्रगमे दुर्लभे फले तपोरूपे गृध्न्वोर्लुब्धयोरतएव एकाकिनोरेकान्तावस्थितयोः वां युवयोः पिशाचयक्षोरगराक्षसेभ्यः एतदाख्येभ्यः उपप्लुवेभ्यस्तथा तदन्यहिंस्रात् सिंहव्याघ्रादिरूपाच्च त्राता रक्षकः को बोभूयिता पुनः पुनर्भविष्यति न कोऽपीत्यर्थः । भवतेर्यङन्ताल्लुट् ॥ ११ ॥

युवां तदित्थंकरणीयतायां
बालौ विमुग्धौ कथमाचरेतम् ।
षट्शास्त्रपारङ्गमसम्विदोऽप्य-
भ्रश्यन्त दोषेण किलैन्द्रियेण ॥ १२ ॥

इत्थंकरणीयतायां इतिकर्तव्यतायां विषये विमूढौ विमुग्धौ बालौ युवां तत्तपः कथं केन प्रकारेणाऽऽचरेतम् निर्वर्तयिष्यथः । भविष्यदर्थे लिङ् । तथा हि-षट्शास्त्रपारङ्गमसम्विदः वेदान्तादिषट्शास्त्रपारङ्गतबुद्धयोऽपि प्राज्ञाः ऐन्द्रियेण इन्द्रियसम्बन्धिना दोषेण कामादिरूपेण अभ्रश्यन्त भ्रंशिताः॥ अर्थान्तरन्यासः १२

ज्योतिश्च तद्गाढतमिस्रतोत्रं
न ज्ञायमानावदपेतरागम् ।

अनाहिते हैमवतेन झंझा-
वातेन चित्ते शिशिरेण शीर्णे ॥ १३ ॥

गाढं दृढं च तत् तमिस्रं अविद्यान्धकारः । 'तमिस्रं तिमिरं तमः' इत्यमरः । तस्य तीव्रमङ्कुशम् । किञ्च अपेतरागं दूरीकृतासक्तिविशेषम् । तत्परं ज्योतिश्च हैमवतेन हिमवत्सम्बन्धिना । तस्येदम्' इत्यण्प्रत्ययः । शिशिरेण शीतलेन झंझावातेन सवृष्टिकेन वायुना शीर्णेऽवसन्नेऽतएवाऽनाहिते असावधाने चित्ते न जागृयात् नैव जागरिष्यति ॥ १३ ॥

वपुः क्व वां माधवमासपुष्पं
कौमारमेतत् सुकुमाररूपम् ।
क्व तत्तपश्चण्डकरातिशायि
शैत्ये हिमानीहिमतातिरेकम् ॥ १४ ॥

सुकुमाररूपं अतिकोमलरूपमित्यर्थः । अतएव माधवमासपुष्पं वासन्तिककुसुमरूपम् । शीतोष्णदुःखासहमित्यर्थः । अभेदरूपकम् । कौमारं कुमारवस्थासम्बन्धि वां युवयोरेतद्वपुः शरीरं क्व । चण्डकरं ग्रीष्मकालीनं सूर्यं अतिशेते इति तथाविधं उष्णादुष्णतरमित्यर्थः । शैत्ये शीततायां विषये पुनर्हिमानीहिमतातिरेकम् । हिमपुञ्जादप्यधिकाशिशिरमित्यर्थः । एवंविधं तत्तपश्च क्व । द्वौ क्वौशब्दौ महदन्तरं सूचयतः । विषमालङ्कारः ॥ १४ ॥

अलङ्घ्यमायारचनापटूनां
देवाङ्गनानां सुरशैलभाजाम् ।
आनायनद्धा विनिपातमूढाः
क्रीडामृगत्वं मुनयः प्रयान्ति ॥ १५ ॥

सुरशैलं हिमालयं भजन्ति सेवन्ते । 'भजो ण्विः' इति

ण्विप्रत्ययः । तासां अलङ्घ्याऽदुर्धर्षा या माया कपटं तस्या रचनायां पटूनां चतुराणां देवाङ्गनानां अप्सरसां आनायो मायाजालम् । 'आनायः पुंसि जालं स्यात्' इत्यमरः । तत्र नद्धा बद्धा मुनयः क्रीडामृगत्वं क्रीडामृगसादृश्यं प्रयान्ति । कीदृशा मुनयः—विनिपाते जालनिपतनकाले मूढा मोहिताः दुर्निवारो हीन्द्रियदोष इति भावः ॥ १५ ॥

सर्वोऽपि तावन्मुखदन्तयोगा-
त्स्वभक्ष्यमश्नीत जगत्प्रसिद्धम् ।
एताः पुनर्वारुणिकारुणाक्ष्यो
दृष्ट्वा मुनिम्मन्यतमान् गिलन्ति ॥ १६ ॥

तावत्सर्वोऽपि जनः मुखदन्तयोगात्स्वभक्ष्यं स्वभोग्यं वस्तु अश्नीत भुञ्जीत इति जगत्प्रसिद्धं अस्ति । वारुणिकारुणाक्ष्यःमदिरारुणलोचनाः एता अप्सरसः पुनः मुनीनात्मानं मन्यन्ते इति मुनिंमन्याः 'आत्ममाने खश्च' इति खश्प्रत्ययः । 'अरुर्द्विष—' इति मुमागमः । अतिशयेन मुनिंमन्या इति मुनिंमन्यतमास्तान् दृष्ट्वैव गिलन्ति खादन्तीति विरुद्धकार्य्योत्पत्तिरूपो विषमालङ्कारः ॥ १६ ॥

अन्या मनाङ्मीलितलोचनार्ध-
श्वभ्रेण तेषां हृदयेऽदयार्द्राः ।
प्रविश्य पीनोन्नतवक्षसोऽत्र
प्रबाहुकं चाऽर्यहलं विलिह्युः ॥ १७ ॥

अदयार्द्रा निष्करुणाः पीनं पीवरं उन्नतं च वक्षः पयोधरयुगं यासां तास्तथोक्ताः । अश्लीलत्ववारणायाऽत्र वक्षःशब्दप्रयोगः । अन्याः काश्चिदप्सरसः तेषां मुनीनां मनाङ्मीलितस्येषन्मीलितस्य समाधियोगाऽनभावोयम् ... लोचनस्याऽर्धश्वभ्रेणार्धच्छिद्रेण

द्वाराऽन्तर्हृदये प्रविश्य प्रवाहुकं क्रूरतयाऽऽर्यहले झटिति विलिह्युः भक्षयेयुः ॥ विषमः ॥ १७ ॥

प्रत्येकं कार्यं विचार्य्य कर्तव्यमित्याह—

**येऽव्याप्रियन्तेऽन्तमलोकयित्वा**
**तत्साधनं शक्तिमथाऽऽत्मनिष्ठाम् ।**
**चरीक्रियेरन्ननुतापमुच्चै-**
**रुच्चावचार्थान् प्रति रिक्तहस्ताः ॥१८॥**

ये जनाः अन्तं परिणामं, तत्साधनं कार्य्यसाधनसामग्रीं अथ चात्मनिष्ठां आत्मवर्तिनीं शक्तिं चाऽलोकयित्वाऽविचार्य व्याप्रियन्ते कार्येषु व्यापृता भवन्ति । ते जनाः उच्चावचार्थान् प्रति रिक्तहस्ताः सन्तः उच्चैरुन्नतं अनुतापं पश्चात्तापं चरीक्रियेरन् । संभावनायां लिङ् ॥ १८ ॥

**किंलोचनं यन्न विदूरदर्शि**
**किं तत्पदं यत् स्थितिमार्गशीर्णम् ।**
**अन्धोऽपि धन्यो ननु पारदृश्वा**
**चरन्ननङ्घ्रिः स्थितिवर्त्मनीड्यः ॥ १९ ॥**

यल्लोचनं विदूरदर्शि सम्यक्पर्य्यालोचकं न तत् किंलोचनं कुत्सितलोचनमित्यर्थः । यत् पदं चरणं स्थितिमार्गात् मर्यादापथात् शीर्णं प्रच्युतं तत् किंपदम् । अर्थान्तरं न्यस्यति । अन्धेति—अन्धोऽपि जनः पारदृश्वा दूरदर्शी सन् धन्यो भवति । अनङ्घ्रिः पङ्गुरपि स्थितिवर्त्मनि मर्य्यादामार्गे चरन् गच्छन् ईड्यः स्तुत्यो भवति । अन्धस्य दूरदर्शनं पङ्गोर्मार्गगमनं चेति विरोधाभासोऽलङ्कारः ॥ १९ ॥

**आरम्भशर्मेन्द्रियलौल्यहेतो-**
**रपथ्यमश्नाति ह्रियो विशङ्कम् ।**

विपत्तिपङ्के पतितं न कश्चि-
त्तं सादरं पश्यति दूरदर्शी ॥ २० ॥

हि यः पुरुषः इन्द्रियलौल्यहेतोर्मनोजिह्वोपस्थादीन्द्रियचाञ्चल्यात् कारणात् विशङ्कं निःशङ्कं आरम्भशर्म आपातसुखदं अपथ्यं वस्तु अश्नाति सेवते विपत्तिपङ्के आपत्कर्दमे पतितं मग्नं तं पुरुषं कश्चिदपि दूरदर्शी बुद्धिमान् सादरं न पश्यति विलोकयति ॥ रूपकालङ्कारः ॥ २० ॥

उत्थाप्यते येषु न तर्जनीह
जनैः क्वचित्कुत्सनसूचनोग्रा ।
किमीश्वरासादितसत्क्रियास्ते
भवन्ति नो मान्यतमा नराणाम् ॥ २१ ॥

येषु पुरुषेषु विषये जनैः श्रेष्ठजनैः क्वचिदपि कुत्सनसूचनोग्रा निन्दासूचनघोरा तर्जनी तदाख्याऽङ्गुलिर्न उत्थाप्यते । ईश्वरात् सकाशात् आसादिता लब्धा सत्क्रिया सत्कारो यैस्ते तथाविधास्ते पुरुषाः नराणां मान्यतमा अतिशयेन माननीया न भवन्ति किम् ? अपि तु भवन्त्येवेत्यर्थः ॥ २१ ॥

क्षितौ जनानामयशःकुठारा-
घाताद्विदीर्येत मनो न येषाम् ।
नूनं नराकारमनुप्रपन्ना-
स्ते प्रस्तरा मूढतरा भराय ॥ २२ ॥

क्षितौ जनानामयशः कुठाराघाताद् लोकापवादकुठारप्रहारात् येषां मनो न विदीर्येत भिद्येत । कर्मकर्तरि लिङ् । नूनमवश्यं नराकारमनुप्रपन्नास्ते मूढा भराय भूभारनिमित्तं प्रस्तराः पाषाणा एव । रूपकम् ॥ २२ ॥

तर्हि किं कर्तव्यमित्याह—

निघ्नेन्द्रियैर्नोपधिदूषितेन
भावेन भूयो गुरुभक्तिनिष्ठैः ।
गृहे स्वदारप्रतिसक्तियुक्तै-
रनीषदापः परमार्थराशिः ॥ २३ ॥

नोपधिदूषितेन निष्कपटेनेत्यर्थः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । भावेन भूयसी महती चाऽसौ गुरुभक्तिः पित्रादिभक्तिस्तत्र निष्ठा स्थितिर्येषां तैः । निघ्नेन्द्रियैर्जितेन्द्रियैः सद्भिः स्वदारप्रतिसक्तियुक्तैः स्वदारनिरतैः पुरुषैः गृहे एव परमार्थराशिः चतुर्वर्गः अनीषदापो दुर्लभः किम् ? नेत्यर्थः । 'ईषद्दुःसुषु—' इत्यादिना खल्प्रत्ययः ॥ २३ ॥

प्रकारान्तरेणाऽऽह—

निरुद्धसर्वेन्द्रियवृत्तिमात्रो
युवा गृहस्थोऽपि मुनिर्महात्मा ।
नाऽऽरण्यको लोलमनःप्रवृत्ति-
र्गुणो गरीयान् न पुनः सुवेषः ॥ २४ ॥

युवाऽपि गृहस्थो गृहाश्रमस्थोऽपि पुरुषः निरुद्धसर्वेन्द्रियवृत्तिमात्रः सन् महात्मा मुनिरित्युच्यते । अरण्ये वसतीत्यारण्यकोऽपि जनः । वुञ्प्रत्ययः । लोलमनःप्रवृत्तिः सन्महात्मा नोच्यते । तथा हि—गुणः संयमादिरूप एव अतिशयेन गुरुः इति गरीयान् । श्रेष्ठतरो भवति । इयसुन् प्रत्ययः । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे ।' इति शब्दार्णवः । सुवेषः पुनर्गरीयान् न ॥ २४ ॥

गृहधर्मानुपदिशति-

पुत्रीयतामात्मकनिष्ठवत्सान्
विष्णूयतां शिष्टजनान् गृहेषु ।
अघं परेषां लघयिष्यतां च
मातृयतामन्यगृहान् विभूतिः ॥ २५ ॥

आत्मनः कनिष्ठा ये वत्साः शिशुमात्रास्तान् पुत्रीयतां पुत्रमिवाऽऽचरतां तथा शिष्टजनान् श्रेष्ठान् पित्रादीन् विष्णूयतां विष्णुमिव मन्यमानानां एवं परेषां गृहाभ्यागतादीनां अघं दुःखं लघयिष्यतां लघयतां, तथा अन्यगृहान् परदारान् मातृयतां मातरमिव पश्यतां पुरुषाणामेव विभूतिः प्रथते इति शेषः ॥२५॥

प्रकारान्तरेणाऽऽह-

य आचरन् चारु कृतं च काले
समीक्षमाणश्च सदा स्वदारान् ।
अन्तर्मनोजाग्रदखण्डसच्चि-
त्सुखः सखा भूतपतेः स गण्यः ॥ २६ ॥

यः पुरुषः काले समये कृतं स्वकर्तव्यं सन्ध्यावन्दनादिकं चारु यथा स्यात्तथाऽऽचरन् आस्ते । तथा सदा स्वदारान् समीक्षमाणः तेष्वनुरक्तोऽस्मीत्यर्थः । एवं सदाऽन्तर्मनोजाग्रदखण्डसच्चित्सुखश्च वर्तते स जनः भूतपतेः शिवस्य सखा सहचरो गण्यः । अन्यथा कथमीदृशी संसारयात्राचातुरीति भावः ॥२६॥

आबालवृद्धावधि यो महात्मा
विनीतितः संसुखयन् सखेव ।
स्वां जन्मदां सूनुरिवाऽन्यपत्नीं
पश्यन् स लोकद्वयसौख्यशाली ॥ २७ ॥

यो महात्मा सखेव आबालवृद्धावधि बालानारभ्य वृद्धपर्यन्तं विनीतितो विनयादेव संसुखयन् तथाऽन्यः पतिर्यस्यास्तां सूनुः पुत्रः स्वां जन्मदां मातरमिव पश्यन् आस्ते स जनो लोकद्वयेऽपि सौख्यशाली भुक्तिमुक्तिभाग् भवतीत्यर्थः ॥ २७ ॥

अन्यथाकरणे दोषमाह—

गुणैर्धनैरप्यथ यौवनेन
सम्पन्नरूपाः कमनीयरूपाम् ।
सतां न तावत्सुषमां लभन्ते
यावद्विनीतिर्न पतेद्दृगन्ते ॥ २८ ॥

अथ यौवनेन तारुण्येन गुणैर्विनयातिरिक्तैर्गुणैर्धनैश्च सम्पन्नरूपा अपि पुरुषास्तावत् सतां कमनीयरूपां सद्भिः स्पृहणीयामित्यर्थः । सुषमां शोभां न लभन्ते । यावत् तेषां दृगन्ते विनयो न पतेत् । यावत्ते विनयं न पश्यन्तीत्यर्थः ॥ २८ ॥

बताऽविनीताश्चतुरा अपि द्राग्
दौवारिकैः स्वर्गपुरस्य दक्षैः ।
निराक्रियन्ते ध्रुवमर्धचन्द्रै-
रनर्थकारोऽविनयो निकामम् ॥ २९ ॥

बतेति खेदे । चतुरा अपि अविनीताः पुरुषाः स्वर्गपुरस्य दक्षैस्तेभ्योऽपि चतुरैर्द्वारि तिष्ठन्ति तैर्दौवारिकैर्द्वारपालैः कर्तृभिः ध्रुवं अर्धचन्द्रैः करणैः निराक्रियन्ते निष्कास्यन्ते । यत्नविशेषेण स्वर्गारूढा अप्यन्ते निपतन्तीति भावः । तथा हि—अविनयो निकाममत्यर्थं अनर्थकारो भवति ॥ २९ ॥

निगमयति—

तदेषु निश्चित्य मयोदितेषु
वाक्येषु भो भावतभावुकाय ।

तावत्प्रवर्तध्वमभीष्टकाष्ठां
परां परायन्ति हिताध्वपान्थाः ॥ ३० ॥

तत् तस्मात्कारणात् भवतां जन्मिनामिदं इति भावतं तच्चै-तद्द भावुकं कल्याणं तस्मै प्रयोजनाय मया निश्चित्योदितेषु कथितेषु एषु युवाभ्यां श्रुतप्रायेषु वाक्येषु तावत्प्रवर्तध्वं प्रवृत्ता भवत । बहुवचनमविवक्षितम् । तथा हि—हिताध्वपान्था हितमार्ग-पथिकाः परामुत्कृष्टां अभीष्टकाष्ठां अभीष्टदिशं परायन्ति प्राप्नु-वन्ति । इणो लट् ॥ ३० ॥

इमां समिद्धार्थपदां निशम्य
प्रसन्नवर्णाभरणामथोक्तिम् ।
प्रसेदिवान् सर्वमनोऽनुकूलां
नारायणो मातरमभ्यवादीत् ॥ ३१ ॥

समिद्धार्थानि अर्थबाहुल्यानि पदानि सुबन्तादीनि यस्यां ताम् । प्रसन्नाः प्रसादगुणसम्पन्नाः ये वर्णा अक्षराणि त एवा-ऽऽभरणानि यस्यास्ताम् । अतएव सर्वेषां मनोनुकूलां इमां मात्रोक्तां उक्तिं वाणीं निशम्य श्रुत्वा प्रसेदिवान् प्रसन्नो नारायणो नाम ज्येष्ठपुत्रः मातरमभ्यवादीत् उक्तवान् ॥ ३१ ॥

किमभाषतेत्याह-

पदेपदे मङ्गलमावहन्ती
तद्ध्वान्तविध्वंसनसिद्धभावा ।
सम्भावनाभूमिरियं सुरम्या-
ऽभिधातुमुक्तिः सरलैर्न शक्या ॥ ३२ ॥

तत् सूर्यप्रकाशेनाऽप्यपरिहार्य्यमित्यर्थः । एवंविधं यद्ध्वान्तं मोहान्धकारः तस्य विध्वंसने निराकरणे सिद्धोऽनुकूलो भावो यस्याः सा तथोक्ताऽतएव पदेपदे प्रतिपदम् । वीप्सायां द्विर्वचनम् ।

मङ्गलमावहन्ती शुभावहा सम्भावनाया यथार्थताया भूमिराश्रयः अतएव सुरम्या प्रत्यवगमनीया इयं त्वयोक्ता उक्तिर्वाणी सरलैः अविचक्षणैर्जनैः कर्तृभिः अभिधातुं कथयितुं न शक्या ॥ ३२ ॥

किन्तदुक्तिवैचित्र्यमित्याह—

न पुत्रवात्सल्यमपाकृतं तद्
विधिर्निषधेने च दर्शितोऽयम् ।
नीता न चास्तं करुणार्द्रता सा
न नैरपेक्ष्यं समलम्भि शब्दैः ॥ ३३ ॥

तया उक्त्या पुत्रवात्सल्यं पुत्रस्नेहोऽपि नाऽपाकृतं न निरस्तम् । निषेधेन तपःप्रवृत्तिनिषेधद्वारा अयमीदृशो विधिरितिकर्तव्यता नियमश्च दर्शितः बोधितः । सा गुरुजनोचिता करुणार्द्रता कृपालुता चाऽस्तं विनाशं न नीता प्रापिता । शब्दैः वाचकैः नैरपेक्ष्यं परस्परसापेक्षताऽभावश्च न समलम्भि प्रापि । सर्वतः समञ्जसं त्वद्वचनमिति भावः ॥ ३३ ॥

प्राज्यं च राज्यं रमणी रमा च
सर्वं विधात्रा लिखितं ललाटे ।
तुच्छं न यावल्लिखिताऽखिलानां
सरस्वती स्वान्तहरा नराणाम् ॥ ३४ ॥

प्राज्यं प्रचुरं राज्यं चतुःसागरान्तभूसाम्राज्यमित्यर्थः । रमणी स्वमनोरमा स्त्री रमा लक्ष्मीश्चेत्येवं रूपं सर्वं विधात्रा ललाटे लिखितमपि तावत् तुच्छं अनादरणीयमित्यर्थः । यावदखिलानां सर्वेषां नराणां स्वान्तहरा हृदयाकर्षिणी । 'स्वान्तं हृन्मानसं मनः' इत्यमरः । सरस्वती वाणी न लिखिता ॥ ३४ ॥

शान्ता विनीताऽऽभरणैरुदारा
गुणैरनेकैर्ग्रथितोरुसारा ।

वाणी स्थितिस्था परिपाकपूज्या
विद्वत्तमान्तर्भवने विभाति ॥ ३५ ॥

शान्ता शान्तिगुणप्रधाना सर्वदा परितुष्टा वा विनीता विनयसम्पन्ना । आभरणैरुपमारूपकादिभिरलङ्कारैः कटककुण्डलादिभिर्वोपलक्षिता उदारा औदार्य्यगुणसम्पन्ना तथाऽनेकैरन्यान्यैर्गुणैरोजःश्लेषप्रसादादिभिः दयादाक्षिण्यादिभिश्च ग्रथिता । ऊरुर्महान् सारो भावविशेषः सुरतादिसारो वा यस्यां सा तथोक्ता । स्थितिस्था मर्य्यादामार्गस्था पतिव्रता च परिपाके परिणामे भोजनपाकविधाने वा पूज्या माननीया एवंविधा वाणी वाक् नायिका च गम्यते। विद्वत्तमानां उत्तमविदुषां स्त्रीलक्षणविज्ञानाञ्चाऽन्तर्भवनेऽन्तःकरणेऽवरोधे वा विभाति शोभते । अत्र श्लेषानुप्राणिताऽप्रस्तुतप्रशंसाऽलङ्कारः ॥ ३५ ॥

सम्प्रति 'एकाकिनोर्वा' इत्यादिकमुत्तरयति-

अध्यात्ममत्यन्तमहामहत्वा
विविक्तभावैरुपगीयमाना ।
त्रायेत या संश्रयतः समन्तात्
साऽस्मासु निघ्ना ह्यनवद्यविद्या ॥ ३६ ॥

अत्यन्तमहामहत्वाऽविरतमहामहिमशालिनी याऽनवद्यविद्या निर्दोषविद्या गायत्रीत्यर्थः । आत्मनीत्यध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः । 'अनश्च' इति टच्प्रत्ययः समासान्तः । विविक्तभावैः एकान्तशुद्धभावैः उपगीयमाना सती संश्रयतो भजमानान् पुरुषान् समन्तात्सर्वतस्त्रायेत त्रातुं शक्नुयात् । शक्यार्थे लिङ् । सा विद्याऽस्मासु निघ्नाऽधीनाऽस्ति। सैवाऽस्माकं रक्षिकेत्यर्थः ३६॥

सद्बुद्धिबीजानि विहाय वर्णान्
कुलक्रमान् किं न्वितरद्धित नः ।

को वा सुधासिन्धुमतीत्य लोके
लोलं मनो हालहलाय कुर्यात् ॥ ३७ ॥

सद्बुद्धिः सत्प्रज्ञा तस्याः बीजानि बीजभूतान् अतएव सुहृद्गुणान् मित्रगुणसम्पन्नान् वर्णान् गायत्रीसम्बन्धिनश्चतुर्विंशतिवर्णान् त्वदुपदेशवाक्यगताक्षराणि वा विहाय त्यक्त्वा नोऽस्माकं इतरदन्यत् किन्तु हितं हितकरम् । न किमपीत्यर्थः । अक्षरशः पूज्या त्वदुपदेशवाक् गायत्री चेति भावः । अर्थान्तरमाह—लोके संसारे को वा जनः सुधासिंधुं अमृतसमुद्रं अतीत्योल्लङ्घ्य हालहलाय कालकूटाय तं भक्षयितुमित्यर्थः । तुमर्थचतुर्थीयम् । मनश्चित्तं लोलं चञ्चलं कुर्य्यात् । न कोऽपि कुर्य्यादित्यर्थः । तत्समाराधनादन्यत्र मनो न लगिष्यतीति तात्पर्य्यम् ॥ ३७ ॥

गुर्वक्षराराधनतत्पराणां
साध्वी मतिर्न व्यभिचारमेति ।
शुद्धा मनोवल्लभसङ्गता सा
प्रतिक्षणं ज्ञानसुतं प्रसूते ॥ ३८ ॥

गुर्वक्षराणां गुरूपदिष्टगायत्र्यादिवर्णानां आराधने तत्पराणामासक्तानां जनानां साध्वी मतिः सती बुद्धिः पतिव्रता नायिका च गम्यते । व्यभिचारं विषयचाञ्चल्यं न एति प्राप्नोति । किन्तु शुद्धा निर्दोषा रजोदर्शनानन्तरं कृतस्नाना च भूत्वा मन एव वल्लभः सहचरस्तेन सङ्गता सती प्रतिक्षणं क्षणेक्षणे ज्ञानसुतं ज्ञानपुत्रं प्रसूते जनयति । तथागतानामस्माकं बुद्धिर्विनिपातमूढा न भविष्यतीति भावः । रूपकम् ॥ ३८ ॥

ज्ञानं च तद्यौवनघोरनिद्रा-
विद्रावणीयात्मविवेकबन्धुम् ।

जनं विनंक्ष्यन्तमभीक्ष्णमेव
सन्त्रायते तत्षडमित्रवर्गात् ॥ ३९ ॥

तत्तादृशं ज्ञानं च कर्तृ यौवनमेव घोरनिद्रा तया विद्रावणीयो विद्राव्यमाणः आत्मविवेक आत्मबोध एव बन्धुर्यस्य तमतएव विनंक्ष्यन्तं निपतिष्यन्तं जनं अभीक्ष्णं शश्वदेव तेषां षण्णाममित्राणां कामादीनां वर्गात् सन्त्रायते रक्षति । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी ॥ ३९ ॥

प्रकारान्तरेणाऽऽह-

विबोधबन्धूत्तमयोगयुक्तो
गवां गणं द्राङ्निरुणद्धि धीरः ।
प्रतिद्रवन्तं विनिपातभीतीन्
समन्ततो दुर्विषयान् विमोहात् ॥ ४० ॥

विबोधबन्धूत्तमयोगेन ज्ञानमित्रनिदर्शितोत्तमोपायेन युक्तः धीरः धैर्यवान् योगिजनो गोपजनो वा विमोहात् अज्ञानात् तृणलोभाद्वा समन्ततो विनिपातभीतीन् दुर्विषयान् शब्दादीन् उन्नतभृगुप्रान्तान् वा प्रतिद्रवन्तं धावन्तं गवामिन्द्रियाणां धेनूनां च गणं समूहं द्राक् झटिति निरुणद्धि निवर्तयतीत्यर्थः । श्लेषरूपकानुप्राणिता समासोक्तिरियम् ॥ ४० ॥

विचारनीरेण निषिच्यमानं
प्रावारितं गोभिरलूयमानम् ।
अधृष्यतामेति समेधमानं
वनं तथा यौवनमस्मदीयम् ॥ ४१ ॥

अस्मदीयं यौवनं तथा वनं च प्रावारितं दुःसङ्गान्निवारितं तत समन्तात्कृतसंवरणं वा ततश्च विचारनीरेण सत्परामर्शजलेन निषि-

च्यमानं अतएव गोभिरिन्द्रियैर्गोपशुभिर्वा अलूयमानं अभक्ष्यमाणमनाकृष्यमाणं वा अतएव समेधमानं विवर्द्धमानं सत् पश्चात् अधृष्यतां स्थिरतामोति प्राप्नोति । तुल्ययोगितालङ्कारः ॥ ४१ ॥

यावन्न वा दुर्विषयानुरक्तां
जनुर्धरः संश्रयते मनीषाम् ।
अखण्डिता शोभत एव तावत्
कीर्तिः शरच्चन्द्रकलावदाता ॥ ४२ ॥

धरतीति धरः । पचाद्यच् । जनुषो धरः जनुर्धरः जन्मधारी पुरुषः यावत् दुर्विषयः शब्दादिः तन्नामा कश्चिन्नायकश्च ध्वन्यते। तत्राऽनुरक्तां अनुविद्धां आसक्तां च मनीषां बुद्धिं तन्नाम्नीं नायिकां च न संश्रयतेऽभिनिविशते भजते वा तावदेव शरच्चन्द्रकलावदाता शरत्कौमुदीशुभ्रा कीर्तिः यशः तन्नाम्नी स्वकीया नायिका चाऽखण्डिता अनष्टाऽनीर्ष्याकषायिता च सती शोभते। 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति दशरूपकादौ । समासोक्तिरलङ्कारः ॥ ४२ ॥

प्रकारान्तरेणाऽऽह–

दण्ड्येषु दण्डं ददता नयेन
निगृह्णताऽनुक्षणमिन्द्रियाणि ।
नृपेण लोकेन च तुल्यरूपा
वितायते कीर्तिपटी गुणाढ्या ॥ ४३ ॥

दण्डमर्हन्ति ते दण्ड्या दण्डनीयाः । 'दण्डादिभ्यो यत्' इति यत्प्रत्ययः । तेषु दण्डं ददता प्रयुञ्जता नृपेण राज्ञा अनुक्षणं प्रतिक्षणं इन्द्रियाणि उत्पथगामीनि निगृह्णता दमयता लोकेन जनेन च तुल्यरूपा गुणाढ्या गुणसम्पन्ना कीर्तिपटी वितायते

विस्तार्य्यते । तनोतेः कर्मणि लट् । 'तनोतेर्यकि' इत्याकारादेशः । वशिनो राज्यसुखमिति भावः ॥ ४३ ॥

दुष्टैरमात्यैरिव देहिराजो
वशीकृतो दुर्विषयैः प्रसह्य ।
भृशं विलोलेन्द्रियलोकवृन्दं
शक्नोति नैतत् किल निग्रहीतुम् ॥ ४४ ॥

दुर्विषयैः शब्दादिभिः दुष्टैरमात्यैर्मन्त्रिभिरिव प्रसह्य बलात्कारेण वशीकृतो देही राजेवेत्युपमितसमासः । भृशमत्यन्तं विलोलेन्द्रियलोकवृन्दं चञ्चलीभूतेन्द्रियप्रजासमूहं निग्रहीतुं न शक्नोति । रूपकम् ॥ ४४ ॥

इत्थं स्वानुभूतिवैदग्धीं निदर्श्य सम्प्रति 'वपुः क वां' इत्यादिकं प्रतिवदति तप्तमित्यादिना-

तप्तं हुताशेऽप्युपलेऽपि घृष्टं
व्याहन्यमानं च घनेन शश्वत् ।
यद्विक्रियामेति न जातरूपं
तदुत्तमं कारणिका वदन्ति ॥ ४५ ॥

यज्जातरूपं सुवर्णम् । 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः । हुताशेऽग्नौ तप्तमपि उपले निकषे घृष्टमपि घनेनाऽऽयसेन करणेन व्याहन्यमानमपि पीड्यमानमपि शश्वत् पुनः पुनः । विक्रियां विकारं नैति प्राप्नोति तत् सुवर्णं कारणिका परीक्षका उत्तमं वदन्ति । 'परीक्षकः कारणिकः' इत्यमरः । अप्रस्तुतप्रशंसालङ्कारः ॥ ४५ ॥

इच्छाक्रियाज्ञानसखीं स्वशक्तिं
मिथोऽविरुद्धां धृतिमानरुन्धन् ।

निर्धूय विघ्नान् गणनायकत्वं
प्रेयान् स नूनं समुपैति सिद्धेः ॥ ४६ ॥

इच्छाक्रियाज्ञानसखीं किञ्च मिथोऽविरुद्धां स्वशक्तिं इच्छाशक्तिं क्रियाशक्तिं ज्ञानशक्तिमित्यर्थः । अरुन्धन् प्रयुञ्जान इत्यर्थः । धृतिमान् धैर्यशाली पुरुषः विघ्नान् कार्य्यव्याघातान् निर्धूय निःसार्य्य सिद्धेः प्रेयान् प्रेष्ठः सन् गणनां मनुष्यसंख्यां अयते प्राप्नोतीति गणनायकः । ण्वुल् । तत्तां गणेशत्वं वा समुपैति प्राप्नोति ॥ ४६ ॥

आलिप्समानैः समुपात्तपाके
फले महिष्ठे शुकचञ्चुपातः ।
आत्मोपपन्नैरगमाधिरोहा-
वरोहदक्षैः किमुदीक्षणीयः ॥ ४७ ॥

समुपात्तः प्राप्तः पाको यस्य तस्मिन्नेवंविधे महिष्ठे श्रेष्ठे फले विषये आलिप्समानैः गृध्नुभिः आत्मोपपन्नैरात्मबलसम्पन्नैः अगमाधिरोहावरोहदक्षैर्वृक्षाधिरोहावरोहानिपुणैः पुरुषैः शुकचंचुपातः शुकचंचुप्रहार उदीक्षणीयः प्रतिपालनीयः किम् । नेत्यर्थः । समर्था हि स्वयमेव वृक्षमधिरुह्य परिणतं फलं गृह्णन्ति न पुनः 'शुकचंचुप्रहारेण कदेदं फलं निपातिष्यति' इति नैव प्रतिपालयन्तीति भावः ॥ ४७ ॥

'गृहे स्वदार' इत्येतत्प्रतिवदति—

निकामबीभत्सविशेषगर्भा
विलासिनी न प्रतिभाति मातः ।
नीष्ठीवनार्हा बहिरेव रम्या
समानधर्म्मा हि पतद्ग्रहेण ॥ ४८ ॥

हे मातः ! बहिरेव रम्या किञ्च निकामं बीभत्सविशेष एव गर्भेऽभ्यन्तरे यस्याः सा अतएव पतद्ग्रहेण 'पीकदान' इति लोकप्रसिद्धेन समानधर्मा तुल्यधर्मा विलासिनी स्त्रीसामान्यमपीत्यर्थः । नोऽस्माकं तपस्विनां निष्ठीवनार्हा प्रतिभाति ॥ ४८ ॥

यस्यामहो दीपशिखोपमायां
वत्सा लभेरञ्छलभत्वमेनाम् ।
महायशस्यप्रचरीकरिष्णुः
क उत्सहेताऽम्ब परिग्रहीतुम् ॥ ४९ ॥

दीपशिखाया उपमा इवोपमा यस्यास्तस्यां तादृश्यां यस्यां विलासिन्यां वत्साः रूढयौवनाः पुत्रादयः शलभत्वं शलभसाधर्म्यं लभेरन् प्राप्नुयुः । तामेनां परिग्रहीतुं महायशसि साधु इति महायशस्यं कार्य्यविशेषः । 'तत्र साधु' इति यत्प्रत्ययः । तत् प्रचरीकरिष्णुः अतिशयेन सिसाधयिषुः को जनः उत्सहेत उत्साहं कुर्य्यात् । न कोऽपीत्यर्थः ॥ ४९ ॥

किं तन्महायशस्यं कर्मेत्याह-

केनाऽपि कर्णेन न चेक्षणेन
श्रुतं न दृष्टं प्रथमं वशित्वम् ।
आलम्ब्य धातुर्वचनेन कश्चिद्
द्वेष्यो मया तत्र विपादनीयः ॥ ५० ॥

केनाऽपि प्रथमं पूर्वं यद्वशित्वं जितेन्द्रियत्वं न कर्णेन श्रुतं न चेक्षणेन नेत्रेण दृष्टम् । तदालम्ब्याऽऽश्रित्य कश्चिद् द्वेष्यः शत्रुः मया व्यापादनीयः निषूदनीयः । तत्र हिमाद्रौ धातुर्ब्रह्मणो वचनेनाऽऽदेशेनेति पूर्वं योज्यम् ॥ ५० ॥

का विशेषता तत्रेत्याऽऽह–

आश्रित्य तां वैश्रवणीं किलाऽऽशां
वैकर्तनं धाम विवृद्धिमेति ।
स्थानं प्रधानं न बलं प्रधानं
स्थाने स्थितः कापुरुषोऽपि शूरः ॥ ५१ ॥

तां प्रसिद्धामित्यर्थः । वैश्रवणः कुबेरो देवताऽस्यास्तामुत्तरामित्यर्थः । 'साऽस्य देवता' इत्यण्प्रत्ययः । 'टिड्ढाणञ्–' इति ङीप् । आशां दिशमाश्रित्य विकर्तनस्य सूर्य्यस्येदं वैकर्त्तनम् । 'तस्येदम्' इत्यण्प्रत्ययः । धाम तेजो विवृद्धिमुपचयं एति गच्छति । यतः स्थानं प्रधानं भवति न पुनर्बलं प्रधानम् । स्थाने स्थितः कापुरुषोऽपि शूरो भवति ॥ ५१ ॥

मातुः प्ररोचनां उत्पादयति–

आसाद्य जन्माऽवनिमण्डलेऽस्मिन्
लोकोत्तरां ख्यातिमुपैष्यतां ताम् ।
गुणक्रियाभिर्महतां सवित्री
धन्या त्रिलोक्यां विरलैव माता ॥ ५२ ॥

अस्मिन्नवनिमण्डले भूमण्डले जन्माऽऽसाद्य प्राप्य गुणक्रियाभिः करणैः तां प्रशंसनीयामित्यर्थः । लोकोत्तरां सर्वोत्कृष्टां ख्यातिं प्रसिद्धिं उपैष्यतां प्राप्तुमिच्छतां महतां महापुरुषाणां सवित्री उत्पादयित्री अतएव धन्या विरला एव काचिदेव माता भवति ॥ ५२ ॥

निगमयति–

प्रसीद वन्द्याऽसि महेन्द्रकार्य्यं
कर्तुं प्रवृत्ते मयि सानुजाते ।

प्रयुङ्क्ष्व तत्स्वस्त्यभिमूर्धहस्ता
यात्रामुहूर्तोऽयकमभ्युपैति ॥ ६३ ॥

तत्तस्मात्कारणात् हे मातः ! प्रसीद वन्द्याऽसि । मूर्द्ध्नः समीपे इत्यभिमूर्धं हस्तो यस्याः सा तथोक्ता सती महेन्द्र-कार्य्यं दानवविध्वंसरूपं कर्तुं प्रवृत्ते उद्यते साऽनुजाते सभ्रातृके मयि नारायणे स्वस्ति आशिषं प्रयुङ्क्ष्व देहि । अयकं अयमित्यर्थः । अकच् प्रत्ययः । यात्रामुहूर्तस्तपोवनप्रस्थान-कालोऽभ्युपैति अभिमुखो भवति ॥ ६३ ॥

इति सुतवचनं निशम्य माता
गुणविदुषी तमसीमहर्षपूर्णा ।
सपुलकमभिनन्द्य मङ्गलेन
नरसहितं व्यसृजत्तपोवनाय ॥ ६४ ॥

इति श्रीदामोदरसूनुसदानन्दकृतौ नरनारायणीये प्रथमः सर्गः ॥ १ ॥

माता मूर्तिः इत्युक्तरूपं सुतवचनं नारायणवाक्यं निशम्य श्रुत्वा गुणेषु पुत्रसम्बन्धिषु ऐश्वरगुणेषु विदुषी विज्ञाऽतएवाऽसीमहर्षपूर्णा सती नरसहितं तं नारायणं सपुलकं यथा स्यात्तथा मङ्गलेन स्वस्त्ययनेनाऽभिनन्द्य प्रसाद्य तपोवनाय व्यसृजत् विसृष्टवती ॥ ६४ ॥

इति श्रीसदानन्दसूनुवाणीविलासकृतायां दिग्दर्शिनी-
समाख्यायां नरनारायणीयकाव्यव्याख्यायां
प्रथमः सर्गः ॥ १ ॥

---

# द्वितीयः सर्गः ।

अथ व्रजन् सानुजनुर्जनन्या
हितोपदेशान् बहुमन्यमानः ।
ददर्श मार्गेऽमरमार्गनिष्ठः
स पर्वतान् चित्रपदप्रकीर्णान् ॥ १ ॥

अथाऽनन्तरं सानुजनुः सानुजः स नारायणो व्रजन् गच्छन् जनन्या मातुः हितोपदेशान् बहुमन्यमानः बहुमानयन् अतएवाऽमरमार्गनिष्ठः तपोमार्गाभिरुचिः सन् मार्गेऽध्वनि चित्रपदप्रकीर्णान् प्रकृतिसौन्दर्यसम्पन्नानित्यर्थः । पर्वतान् शैलपङ्क्तिमित्यर्थः । ददर्श दृष्टवान् ॥ १ ॥

इतःपरं पञ्चदशपद्यात्मकेन कुलकेन पर्वतान् विशिनष्टि—

फलप्रसूनादिविभूतिमद्भि-
रुद्धैर्नमद्भिर्नवनीरदाभैः ।
कलं क्वणद्भिस्तरुभिः खगास्यै-
रलंकृतानुन्नतशृङ्गरूढैः ॥ २ ॥

फलप्रसूनादिविभूतिमद्भिः फलपुष्पपल्लवसमृद्धिसम्पन्नैरतएव नमद्भिः तथा नवनीरदाभैः नवमेघवत्परोपकारिभिः कृष्णवर्णैश्चेत्यर्थः । तथा खगास्यैः पक्षिमुखैः कलं क्वणद्भिः प्रियं नदद्भिः अतएवोन्नतशृङ्गरूढैरुच्चपदारूढैः उद्धैः शस्तैः तरुभिः वृक्षैरलंकृतान् । समृद्धाः पुरुषाः अधिगतविनयगुणाः परोपकारिणः सुमधुरभाषिणश्च सन्त उच्चपदारूढा भवन्तीति ध्वनिः ॥ २ ॥

कादम्बिनीनां ध्वनिवर्षमिश्रै-
र्विवृत्तविद्युन्नयनाभिपातैः ।

आपीड्यमानानपि नो जिहानान्
महाचलत्वं सुतरां सहिष्णून् ॥ ३ ॥

कादम्बिन्यो मेघमालाः। 'कादम्बिनी मेघमाला' इत्यमरः। कादम्बिनीशब्देन कामिन्यश्च ध्वन्यन्ते। तासां ध्वनिभिर्गर्जितैर्वर्षेण वृष्ट्या च मिश्रैः सम्पृक्तैः। पक्षे ध्वनयः संकेता वर्षः स्नेहश्च। वृषु स्नेहने। ताभ्यां मिश्रैः। विवृत्तानि विवृत्तिमुपगतानि यानि विद्युन्नयनानि विद्युत्कटक्षाः तेषां अभिपातैः आपीड्यमानानपि सुतरां सहिष्णून् सहनशीलानतएव महाचलत्वमतिस्थिरतां धीरतां च नो जिहानान् नैव त्यजतः ॥ ३ ॥

क्वचिल्ललाटन्तपसप्तसप्त्या-
तपप्रतप्तेष्वपि सुस्थितेषु।
गात्रेषु रोमायितशाड्वलेषु
विष्वग्विकाशं भजतः प्रकाशम् ॥ ४ ॥

क्वचित् ललाटन्तपः प्रखरतरश्चाऽसौ सप्तसप्तिः सप्ताश्वः सूर्य्य इति यावत्। तस्याऽऽतपेन घर्मेण प्रतप्तेष्वपि सुस्थितेषु अदुःस्थितेषु अतएव रोमायितानि रोमाञ्चसदृशानि शाड्वलानि हरिततृणप्रायदेशा येषां तेषु तथोक्तेषु गात्रेषु प्रकाशं प्रत्यक्षं विकाशं भजतः ॥ ४ ॥

शब्दायमानैर्मधुरं विहङ्गै-
र्गर्ज्जद्भिरुग्रं च महामृगेन्द्रैः।
अधिष्ठितानप्यभितः स्वमौन-
व्रतं दुरुच्छेदतमं दधानान् ॥ ५ ॥

अभितः समन्तात् मधुरं यथा स्यात्तथा शब्दायमानैः शब्दं कुर्वद्भिः। 'शब्दवैरकलहा-' इति क्यङ्प्रत्ययः। विहङ्गैः

पक्षिभिः उग्रं भयङ्करं गर्ज्जद्भिः महामृगेन्द्रैः महासिंहैश्चाऽधिष्ठितान् अध्यासितानपि तथापि दुरुच्छेदतमं अनुच्छेद्यं स्वमौनव्रतं तूष्णींभावं दधानानेव ॥ ५ ॥

क्वचिन्महादावहुताशनस्य
ज्वालाभिरालीढतनून् तताभिः ।
उद्योतितान्तःकुहराभिलीन-
वन्येन्द्रियान् प्रस्नुतनिम्नगौघान् ॥ ६ ॥

क्वचिन्महादावहुताशनस्य महावनाग्नेस्तताभिर्विस्तृताभिः ज्वालाभिः आलीढतनून् दग्धगात्रान् । तथा उद्योतिते वनाग्निप्रकाशेन प्रकाशितेऽन्तःकुहरे गुहोदरेऽन्तर्दहरे वाऽभिलीनानि वह्निभयाद्योगाद् वा गुप्तानि वन्येन्द्रियाणि वनमृगेन्द्रियाणि येषान्तान् तथापि प्रस्नुताः प्रवृत्तप्रवाहा निम्नगौघा नदीप्रवाहा येषु तान् तथोक्तान् । निम्नगाशब्देन इडापिङ्गलादयो नाड्यश्च ध्वन्यन्ते ॥ ६ ॥

अध्यात्ममालोक्यतमानि लोकै-
र्विभिन्नवर्णाश्रितकोरकाणि ।
पद्मानि सद्मान्यमलान्यलीनान्
सहंसलीलानि समादधानान् ॥ ७ ॥

लोकैर्जनसामान्येन योगिजनैर्वाऽऽलोक्यतमानि दृश्यतमानि विभावनीयानि वा विभिन्नवर्णैर्हरितपीतादिभिः वंशंषसंप्रभृतिभिरक्षरैर्वा आश्रितानि आस्थितानि कोरकाणि कुड्मलानि येषां तानि । हंसो मरालः उत्क्रमणप्रवेशाभ्यां निःश्वासस्य प्रवृत्तोऽजपाख्यो मन्त्रविशेषश्च तस्य लीलया सहितानि । अलीनां भ्रमराणां गणपत्यादीनां देवानां वाऽमलानि शुद्धानि सद्मानि गृहाणि पद्मानि कमलानि पद्मशब्देन व्यवहरणीयानि मूलाधारादीनि

वाऽध्यात्मं आत्मनि समादधानान् धारयतः समाधिद्वारा विभावयतो वा । तथा चोक्तम्-"आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे, द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के । वासान्ते बालमध्ये डफकठसहिते षोडशारे स्वराणां, हंसं तत्त्वार्थसिद्ध्यै सकलतनुगतं वर्णरूपं नमामि ॥" ॥ ७ ॥

पादैरनेकैर्विविधैः शिरोभि-
रनेकलोकप्रकरप्रकीर्णैः ।
अङ्गैस्तदन्यैर्मणिलोचनैश्च
वैराजमध्यापयतः स्वरूपम् ॥ ८ ॥

अनेकैः पादैः प्रत्यन्तपर्वतैः चरणैर्वा । 'पादाः प्रत्यन्तपर्वताः' 'पदाङ्घ्रिः प्रपदं पादः' इति चामरः । विविधैः शिरोभिः शृङ्गैः शीर्षैश्चाऽनेकैः मणिलोचनैश्च तथाऽनेकेषां लोकानां जनानां भूर्भुवःस्वरादीनां वा प्रकरेण समूहेन प्रकीर्णैर्व्याप्तैः तदन्यैरङ्गैश्च वैराजं स्वरूपं अध्यापयतः स्मारयतः । स्मरणालङ्कारः ॥ ८ ॥

नितम्बदेशे विपुले विरूढा
वल्लीमतल्लीरलिरावरम्याः ।
सम्पन्नपुष्पस्तबकावनम्रा
नित्यं तथैवोद्वहतः सरागः ॥ ९ ॥

विपुले बृहति नितम्बदेशे कटकप्रदेशे । जघनप्रदेशश्च ध्वन्यते । विरूढा उत्पन्ना आरूढाश्च । सम्पन्नैः पुष्पस्तबकैरवनम्राः । स्तनभारोपलक्षणमिदम् । अलिरावरम्या भ्रमरभणितरम्या वल्लीमतल्लीः प्रशस्तलताः नित्यं सर्वेषु कालेषु तथैवाऽपरिणामशालिनीरे वाऽलब्धसुरतास्वादा वा उद्वहतो धारयतः । वल्लीशब्देन नायिकाश्च गम्यन्ते । ध्वन्यलङ्कारः । जितेन्द्रियाः खलु स्वयं जघनारूढायामपि नायिकायां सुरतोत्सुका नेति ध्वनिः ॥ ९ ॥

रसैश्च भावैर्विविधैर्गुणैस्तै-
र्मनोरमैस्ताभिरलंक्रियाभिः।
समानसानां हृदयङ्गमाभिः
काव्यायमानान् ध्वनिभिर्विचित्रैः॥ १० ॥

विविधैरनेकप्रकारैस्तैः प्रसिद्धैः रसैः प्रकृतिसौन्दर्यैः शृङ्गार-करुणादिभिर्वा भावैर्वस्तुविशेषैरभिप्रायविशेषैर्वा गुणैरौन्नत्यादिभिः प्रसादौजःश्लेषप्रभृतिभिर्वा समानसानां सहृदयानां हृदयङ्गमाभि-स्ताभिः साक्षात्क्रियमाणाभिः अलंक्रियाभिः वनपङ्क्त्यादिरूपाभिः। उपमारूपकादिभिर्वा विचित्रैर्ध्वनिभिः मृगपक्षिणां शब्दैः का-व्याङ्गीभूतैश्च काव्यायमानान् काव्यमिवाऽऽचरतः॥ १० ॥

भृगोरथाऽभास्वरशुक्लरूपा-
मपां ततिं धारिकया पतन्तीम्।
सशीकरामभ्रमतङ्गशुण्डा-
दण्डोपमेयां वहतः सघोषम्॥ ११ ॥

अथ भृगोरुन्नतशृङ्गात् धारिकया धारारूपेण सघोषं सशब्दं पतन्तीम् अभास्वरशुक्लरूपां सशीकरां सजलकणोद्गारां अतएवाऽ-भ्रमतङ्ग ऐरावतः तस्य शुण्डादण्डेनोपमेयामुपमातुं योग्यामपां ततिं जलानां विस्तृतिं वहतो धारयतः॥ ११ ॥

तपस्यतां गह्वरसंश्रितानाम्
प्रियं वयोभी रुतमाचरद्भिः।
सत्पक्षपातैरुचितां मुनीनाम्
तां योगविद्यामिव भाषमाणान्॥ १२ ॥

सत्पक्षपातैः समीचीनोड्डीनैः सत्पक्षपातिभिश्च प्रियं हृद्यं रुतं शब्दं आचरद्भिः कुर्वद्भिः वयोभिः पक्षिभिः करणैः गह्वरसंश्रि-

तानां गुहोदरसन्निविष्टानां तपस्यतां तपः कुर्वतां मुनीनां तामात्मसंस्थां योगविद्यां भाषमाणानिवेत्युत्प्रेक्षा ॥ १२ ॥

घोषाङ्गनाभिः परिमथ्यमाना-
दुज्जृम्भमाणैर्ध्वनिभिर्गभीरैः ।
गुहोदरागाहिभिरप्रतर्क्याम्
प्रीतिं परां प्रापयतश्च पान्थान् ॥ १३ ॥

घोषाङ्गनाभिराभीरस्त्रीभिः परिमथ्यमानाद् दध्न इति शेषः । उज्जृम्भमाणैरुद्गच्छद्भिर्गुहोदरागाहिभिर्गह्वरान्तःसंक्रान्तैः गभीरैर्ध्वनिभिः करणैः पान्थान् पथिकान् जनान् परामुत्कृष्टां अप्रतर्क्यामनिर्वचनीयां प्रीतिं प्रापयतो नयतः । 'गतिबुद्धि-' इत्यादिना कर्मत्वम् ॥ १३ ॥

मृत्स्नामयीः शाड्वलिताः स्थलीस्ताः
स्तनन्धयैः स्वैरमनुद्रुतेन ।
अध्यास्यमाना हरिणीगणेन
गुर्वीर्दधानानकुतोभयेन ॥ १४ ॥

मृत्स्नामयीः प्रशस्तमृत्तिकाप्रचुराः । 'प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका' इत्यमरः । शाड्वलिताः सञ्जातहरिततृणाः स्तनन्धयैः स्तनपायिभिः शावकैः स्वैरं स्वच्छन्दं अनुद्रुतेनाऽनुगतेनाऽकुतोभयेन निःशङ्केन हरिणीगणेन मृगीसमूहेन अध्यास्यमानाऽऽश्रीयमाणाः ताः गुर्वीः स्थलीर्दधानान् ॥ १४ ॥

निःशङ्कमुत्पुच्छयमानवत्सै-
र्हुङ्कारहूतैर्मुदिता घटोध्नीः ।
उत्स्नाः सुजाता निजगोचरेषु
पदेपदे पूरयतस्तृणौघैः ॥ १५ ॥

हुङ्कारेण हूतैराकारितैः निशङ्कमुत्पुच्छयमानाः पुच्छं उत्थाय धावन्तः ये वत्सास्तर्णकास्तैर्हेतुभिः मुदिताः प्रसन्नाः घटोध्नीः सुजाताः उत्स्नाः धेनूः निजगोचरेषु प्रदेशविशेषेषु तृणौघैस्तृण-पुञ्जैः पदेपदे प्रतिपदं पूरयत आप्याययतः । पूरी आप्यायने । स्वभावोक्तिः ॥ १९ ॥

शक्राग्निसूर्य्यैर्मदनेन पद्मा-
ब्राह्मीशिवाभिश्च हरिप्रियौघैः ।
मन्दाररम्भासुमनःसमूहैः
स्वर्गायमाणान् वसुभिः सुरभ्या ॥ १६ ॥

शक्रो वनौषधविशेषः इन्द्रश्च । अग्निश्चित्रकलता वह्निश्च । 'चित्रको वह्निसंज्ञकः' इत्यमरः । सूर्य्योऽर्कवृक्षो विवस्वान् च तैः । मदनेन तदाख्यवृक्षेण । कन्दर्पेण वा । पद्माऽचितरा । 'अव्यथाऽ-चितरा पद्मा' इत्यमरः । पक्षे लक्ष्मीः । ब्राह्मी सरस्वती तदाख्यः क्षुपविशेषश्च । शिवा हरीतकी पार्वती च ताभिः । हरिप्रियास्तुल-सिकाः हरिदासा नारदादयश्च तेषां ओघैः पुञ्जैः मन्दारस्तदाख्यो वृक्षः कल्पवृक्षश्च । रम्भाऽप्सरोविशिष्टा कदलीलता वा । सुमनसो मालतीलताः देवाश्च तेषां समूहैः वसुभिः 'गूमा' इति प्रसिद्धैः देवविशेषैश्च । सुरभ्या गजभक्ष्यया कामधेन्वा चोपलक्षणैः स्वर्गा-यमानान् स्वर्गमिवाचरतः । श्लेषः ॥ १६ ॥

शिलोच्चयालोकनतः प्रहृष्यन्
ताँस्तान् विशेषानपराँश्च गृह्णन् ।
मनोहराञ्श्रावणचाक्षुषादीन्
लक्ष्यात्स्खलन्नाऽपि स आत्मनीनात् ॥१७॥

शिलोच्चयानां पर्वतानां आलोकनतो दर्शनात् प्रहृष्यन् मोदमानः स नारायणः श्रवणेन गृह्यन्ते श्रावणाः शब्दाः चक्षुषा

गृह्णन्ते चाक्षुषाणि रूपाणि च । शैषिकोऽण् । तदादीन् तत्प्रकारान् अपरान् अन्यान्यान् मनोहरान् तान् तान् प्रसिद्धान् विशेषाँश्च गृह्णन् पश्यन् शृण्वन् स्पृशन् जिघ्रन्नित्यर्थः । आत्मने हितं 'आत्मन्विश्वजन-' इत्यादिना खप्रत्ययः । तस्माल्लक्ष्याद् ध्येयवस्तुविशेषाच्च न स्खलन् तत्र समाहितमना भवन्नित्यर्थः ॥ १७ ॥

तां पुण्यलभ्यां द्रुतमाससाद
पुरःस्थितां मातरमभ्युपेताम् ।
मिष्टैः फलैरुत्कलिकावगाढाम्
शङ्के विशालां बदरीवनान्ताम् ॥ १८ ॥

पुण्यैरेव लभ्यां मिष्टैः फलैः पुरोऽग्रतः अभ्युपेतां स्थितां उत्कलिका उत्कृष्टकलिका लता उत्कण्ठा वा । 'उत्कण्ठोत्कलिके समे' इत्यमरः । तयाऽवगाढां बदरीवनैः अन्तां रम्यां तां प्रसिद्धां विशालां मिष्टानि फलान्यादाय अग्रतः स्थितां उत्कण्ठितां मातरमेव द्रुतमाससाद प्रापेति शङ्के मन्ये इत्युत्प्रेक्षा । 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षावाचकाः शब्दाः-' इति ॥ १८ ॥

न तप्तकुण्डोदविगाहनोत्थाम्
न कूर्मधाराम्बुरसोपजाताम् ।
ज्ञातुर्मुदं तां जननं गतार्थम्
खगारवैरेवमुदाहरन्तीम् ॥ १९ ॥

आलापयन्त्या कलपण्डितेन
हृष्टेन कादम्बकुलेन सख्या ।
श्रीगङ्गया तुङ्गतरङ्गदोर्भि-
राश्लिष्यमाणां सरसीरुहाक्ष्या ॥ २० ॥

अभ्रंलिहैर्हैमवतैः सितिम्ना
श्रीदेववृन्दैरिव तुङ्गशृङ्गैः ।
विष्वग्वृतांताममृतार्थिभिस्तै-
र्मध्येनगं श्रीहरिरध्युवास ॥२१॥ विशेषकम् ।

तप्तकुण्डोदविगाहनोत्थां तप्तकुण्डजलस्नानोत्पन्नां तामनिर्वचनीयां मुदं प्रीतिं न ज्ञातुरनुभवितुः तथा कूर्मधाराम्बुरसोपजातां कूर्मधाराजलपानोत्पन्नां च मुदं न ज्ञातुः पुरुषस्य जननं जन्म गतार्थं निरर्थकम् । एवं खगारवैः पक्षिकलकलैरुदाहरन्तीं कथयन्तीम् । उत्प्रेक्षा ॥ १९ ॥ कलपण्डितेन हृष्टेन कादम्बकुलेन कलहंसकुलेन आलापयन्त्या शब्दयन्त्या सखीवाचरतीति सखी । सखीयतेः क्विप् । तया सरसीरुहाक्ष्या श्रीगङ्गयाऽलकनन्दया तुङ्गतरङ्गदोर्भिरुन्नततरङ्गहस्तैराश्लिष्यमाणामालिङ्ग्यमानाम् ॥ २० ॥ सितिम्ना धवलिम्ना उपलक्षितैः अभ्रंलिहैरुन्नतैः हिमवतः इमे हैमवताः । 'तस्येदम्' इत्यण्प्रत्ययः । तैः दिव्यशृङ्गैः अमृतार्थिभिर्मोक्षार्थिभिः सुधार्थिभिश्चेति ध्वन्यते । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् । मोक्षोऽपवर्गः—' 'पीयूषममृतं सुधा' इति चामरः । श्रीदेववृन्दैरिव विष्वक् समन्तादावृतां परिमण्डलितां तां विशालां नगस्य हिमालयस्य मध्ये इति मध्येनगम् । 'पारे मध्ये षष्ठ्या वा' इति समासः । श्रीहरिः नरनारायणात्मकः मायाहरिश्चाऽध्युवासाऽधितष्ठौ । 'उपान्वध्याङ्वसः' इति कर्मत्वम् ॥ २१ ॥

अभ्यङ्कमाक्रान्तनगावुभौ तौ
निःशङ्कमस्याः स्मितशोभितास्यौ ।
सहोदरौ स्निग्धतया जनन्या
वक्षोजलग्नाविव दिद्युताते ॥ २२ ॥

अस्या विशालायाः अभ्यङ्कं उत्सङ्गे। विभक्त्यर्थेऽव्ययीभावः। निःशङ्कमकुतोभयमाक्रान्तनगौ आसादितपर्वतद्वयौ स्मितशोभितास्यौ प्रसन्नावित्यर्थः। तावुभौ सहोदरौ नरनारायणौ स्निग्धतया स्नेहेन जनन्या मातुः वक्षोजलग्नाविव स्तनलग्नाविव दिद्युताते विरेजाते। अनेन क्षुत्पिपासादिदुःखनिवृत्तिः सूचिता। उत्प्रेक्षागर्भोपमालङ्कारः॥ २२॥

तीर्थाभिषेकैर्नियमेन तावद्
वाचंयमत्वेन तथौपवस्तैः।
ईर्य्यापथेऽस्थीयत योगविद्भ्या-
मपर्य्ययोपांशुजपैश्च ताभ्याम्॥ २३॥

योगविद्भ्यां योगविधिज्ञाभ्याम्। 'योगश्चित्तवृत्तिनिरोधः' इति पतञ्जलिः। ताभ्यां नरनारायणाभ्याम्। कर्तरि तृतीया। तावत् प्रथमं नियमेन नियमतः तीर्थाभिषेकैस्त्रैकालिकतीर्थस्नानैः वाचंयमत्वेन मौनेन तथा औपवस्तैरुपवासैः अपर्य्ययैरनातिक्रमैरुपांशुजपैश्च करणैः ईर्य्यापथे योगमार्गेऽस्थीयत स्थितम्॥ २३॥

चकासयन् तद्धृदयान्तरालम्
रुद्धेन्द्रियद्वारमुदारमुच्चैः।
अलब्धसञ्चारममित्रवातैः
स्नेहाज्जजागार विबोधदीपः॥ २४॥

विबोधदीपो ज्ञानप्रदीपः कर्ता। उच्चैरुन्नतं उदारं शीतोष्णदुःखसुखयोः समवर्तीत्यर्थः। रुद्धानीन्द्रियद्वाराणि यस्य तदत एवाऽमित्रवातैः कामादिशत्रुसमीरैः अलब्धसञ्चारमप्राप्तप्रवेशावकाशं तयोर्नरनारायणयोर्हृदयान्तरालं हृदयगृहाभ्यन्तरं चकासयन् प्रकाशयन् तद्गतान्धकारमपनयन्नित्यर्थः। स्नेहात्प्रेमरूपतैलात् हेतोर्जजागार जागृतवान्॥ २४॥

क्व सा बुभुक्षा क्व च सा पिपासा
क्व सर्वगा तुच्छसुखाणुकाम्या ।
शुश्रूषुताऽनाहतनादयोगा-
दुड्डिड्यिरे तद्विषयात्मघोषाः ॥ २५ ॥

सा प्रसिद्धा सर्वगा सर्वसाधारणव्यापिनी बुभुक्षा भोक्तुमिच्छा क्व । सा पिपासा पातुमिच्छा च क्व । तथा तुच्छसुखाणुकाम्याऽन्यान्यक्षुद्रसुखलेशेच्छा च क्व । एवं शुश्रूषुता श्रोतुमिच्छा च क्व । किं बहुना ते च ते विषया रसरूपशब्दादयस्त एवाऽऽत्मघोषाः काकाः अनाहतनादयोगादनाहतनादानुसन्धानयोगादुड्डिड्यिरे उड्डीनाः विलयं प्रापुरित्यर्थः ॥ २५ ॥

ब्रह्मासनावस्थितयोः सुतारम्
ध्यानेन योगाद्गणरात्रमेव ।
सविस्मयं कल्यखगारवेण
तयोस्तपःसाक्षिकतां शशंस ॥ २६ ॥

सुतारं स्पष्टनक्षत्रकनीनिकमित्यर्थः । गणरात्रं बह्व्यो निशाः । 'गणरात्रं निशा बह्व्यः' इत्यमरः । तदेव नाऽन्य इत्यर्थः । योगाद्धेतोः यद्ध्यानं तेनोपलक्षितयोः ब्रह्मासनेन ब्रह्मासनमुद्रयाऽवस्थितयोरासीनयोः तयोर्नरनारायणयोः तपःसाक्षिकतां तपःप्रमाणं कल्यखगारवेण प्रातःकालिकपक्षिकलकलेन सविस्मयं साश्चर्य्यं शशंस जगाद । उत्प्रेक्षा ॥ २६ ॥

प्रसृत्वरैरूर्ध्वमधश्च तिर्यक्
तेजोमयैराशुविकाशिताशैः ।
उपप्लवैर्भालमरीचिजालै-
र्व्यलाघ्यवड्यायविलायमह्नोः ॥ २७ ॥

ऊर्ध्वमधस्तिर्यक् च प्रसृत्वरैर्विसृमरैस्तेजोमयैस्तेजःप्रचुरैः विकाशिताशैरुद्द्योतितदिग्भिः अर्होः पूज्ययोर्मुन्योर्भालमरीचिजालैर्ललाटोत्थकिरणप्रकरैः कारणैः उपप्लवैर्विघ्नैः कर्तृभिः अवश्यायो नीहारः स यथा विलीयते तथा व्यलायि व्यलीयत । भावे लुङ् ॥२७॥

चन्द्रार्धहृद्येऽतिदिवाकराभे
मनोभिरामेऽग्र्यललाटदेशे ।
लुब्धा हि वक्षःप्रतिपेषमिष्टा-
वुभौ परीरब्धुमियेष सिद्धिः ॥ २८ ॥

चन्द्रार्धहृद्येऽर्धचन्द्राकारे किञ्चाऽतिदिवाकराभे सूर्यद्युतिमतिक्रान्ते मनोभिरामे मनःकमनीयेऽग्र्यललाटदेशे नरनारायणयि लुब्धाऽऽसक्ता सिद्धिः तपःसिद्धिः उभौ भ्रातरौ इष्टौ प्रियौ परीरब्धुमालिङ्गितुं इयेष चकमे वक्षःप्रतिपेषं उरः प्रतिपिष्य । णमुल् प्रत्ययः ॥ २८ ॥

समुज्ज्वलन्मङ्गलयोगवृष्टया
न केवलं साऽऽश्रमभूमिरेव ।
ब्रह्माण्डभाण्डोदरमूर्ध्वपूर-
मपूर्य्यतैतत्तपसः प्रभावात् ॥ २९ ॥

एतत्तपसः प्रभावात् नरनारायणीयतपोनुभावाद्धेतोः समुज्ज्वलन्ती या मङ्गलयोगवृष्टिस्तया कर्त्र्या केवलं सा नरनारायणीया आश्रमभूमिरेव नाऽपूर्य्यत किंतु ब्रह्माण्डभाण्डोदरमेव विश्वं ऊर्ध्वपूरमपूर्य्यत । णमुल् ॥ २९ ॥

नान्दी नदन्ती किल यत्र तत्र
प्रशुश्रुवे श्रोत्रसुखं सुवाना ।
समश्नुवाना सहसा दिगन्तान्
दिशयान्तरायानपसारयन्ती ॥ ३० ॥

यत्र तत्र सर्वत्रेत्यर्थः । श्रोत्रसुखं श्रवणसौख्यं सुवाना उत्पादयन्ती नान्दी मङ्गलवाद्यध्वनिः नदन्ती प्रशुश्रुवे श्रूयते स्म । कर्मकर्तरि लिट् । किं कुर्वन्ती—सहसा झटिति दिगन्तान् समश्नुवाना व्याप्नुवाना तथा दिश्यान् दिक्षु भवान् अन्तरायान् विघ्नान् अपसारयन्ती अपनयन्ती ॥ ३० ॥

पपात नोल्का युयुधे ग्रहाणाम्
गणो न जज्वाल दिगन्तरालम् ।
न रुग्व्रजो दृग्विषयीबभूव
ग्रहो न जग्राह रवीन्दुबिम्बम् ॥ ३१ ॥

उल्का न पपात । ग्रहाणां गणो न युयुधे । दिगन्तरालं न जज्वाल देहे । रुग्व्रजो रोगिसमूहो न दृग्विषयीबभूव दृश्यते स्म । ग्रहो राहुः रवीन्दुबिम्बं न जग्राह । दीपकभेदः ॥ ३१ ॥

मितम्पचत्वं क्वचिदेव लिल्ये
नृणां मुहुः खादतमोदताभिः ।
अन्यत्र नित्यं तपतस्तुताभि-
रकर्मठत्वं पदमुज्जहार ॥ ३२ ॥

मुहुः खादत खादत मोदत मोदतेत्यसकृद् यासु क्रियासु कथ्यते ताः खादतमोदतास्ताभिरुपलक्षितानां नृणां मितम्पचत्वं दारिद्र्यं क्वचिदेव विलिल्ये विलीनम् । अन्यत्र क्वचित्प्रदेशे च तपतस्तुताभिः करणैः अकर्मठत्वं पदमुज्जहार ॥ ३२ ॥

गृहे गृहे भङ्गुरकुन्तलानि
मुग्धस्मितान्यल्परदाङ्कुराणि ।
लीलायमानानि च शावकानाम्
कुलानि पित्रोर्मुदमावहन्त ॥ ३३ ॥

गृहे गृहे भङ्गुरकुन्तलानि कुटिलचिकुराणि मुग्धस्मितानि सुन्दरस्मितगर्भमुखानि । 'मुग्धः सुन्दरमूढयोः' इति विश्वः । अत एवाऽल्पानि लक्ष्याणि रदाङ्कुराणि दन्तप्ररोहाः येषां तानि लीलायमानानि साक्षाल्लीलारूपमापन्नानीव शावकानां शिशूनां कुलानि पित्रोर्मातापित्रोः । 'पिता मात्रा' इत्येकशेषः । मुदं प्रीतिमावहन्त आवहन्ति स्म । काव्यलिङ्गभेदः ॥ ३३ ॥

वर्णाश्रमाचारसुचारुलक्ष्मी-
रदीपिरूपं खलु भारतीभूः ।
विद्यालतास्तत्वफलान्यचिन्व-
न्नध्यापिपञ्छिष्यगणांस्त्रयीं ते ॥ ३४ ॥

वर्णानां ब्राह्मणादीनां आश्रमाचारैराश्रमानुरूपैर्धर्मैः सुचार्वी लक्ष्मीः श्रीर्यस्याः सा तथोक्ता भारतीभू भारताख्यदेशसंबन्धिनी भूमिः । 'देशोऽयं भारतं वर्षं शरावत्यास्तु योऽवधिः' इत्यमरः । अदीपिरूपम् प्राशस्त्येन विरेजे । रूपमिति प्राशस्त्ये प्रत्ययः । ते वर्णाश्रमिणो द्विजातयः विद्यालतास्तत्वफलानि अचिन्वन् । तथा शिष्यगणान् त्रयीं ऋगादिश्रुतिमध्यापिपन् पाठयामासुः ॥ ३४ ॥

क्रन्दन् न चाऽश्रूयत कोऽपि लोकः
कुतोऽपि शोकेन च सङ्कटेन ।
क्वचिन्न चाऽदृश्यत दीनवन्या
वनस्थली पुष्पफलौघहीना ॥ ३५ ॥

कोऽपि लोकः कुतोऽपि शोकेन सङ्कटेन च क्रन्दन् रुदश्च नाऽश्रूयत । तथा क्वचिदपि प्रदेशे दीनवन्या दुर्बलवनजन्तुः पुष्पफलौघहीना वनस्थली च नाऽदृश्यत । सर्वं चराचरं प्रसन्नमासीदित्यर्थः ॥ ३५ ॥

प्रदक्षिणं हव्यसमिद्धजिह्वः
प्रचक्रमे सत्रहुताशनोऽपि ।
आवर्जितेनाऽथ तनूजहस्तैः
कव्येन चाऽप्रीयत शुक्तरूपैः ॥ ३६ ॥

हव्येन हवनद्रव्येण समिद्धाः प्रदीप्ताः जिह्वाः कालीकरालयादयः सप्त जिह्वाः यस्य स तथोक्तः । सत्रहुताशनो यज्ञाग्निरपि प्रदक्षिणं यथा स्यात्तथा प्रचक्रमे जज्वालेत्यर्थः । अथ पुनः तनूजहस्तैः पुत्रहस्तैरावर्जितेन दत्तेन कव्येन पितृयोग्येन द्रव्येण शुक्तरूपैः पितृभिरग्निष्वात्तादिभिश्चाऽप्रीयताऽतृप्यत ॥ ३६ ॥

विनैव बीजाकृतिमुत्तमानि
विश्वम्भरा धान्यमयान्यफालीत् ।
क्षेमङ्करैर्वारिधरैरवार्षि
सुखाकरैर्गन्धवहैरवाहि ॥ ३७ ॥

बीजाक्रियते बीजेन सह कृष्यते इति बीजाकृतिः । भावे क्तिन् । 'कृञो द्वितीय–' इत्यादिना डाच् प्रत्ययः । तां विनैव बीजवपनं विनैवेत्यर्थः । विश्वम्भरा भूमिः उत्तमानि धान्यान्येव धान्यमयानि । स्वार्थे मयट् । अफालीत् निष्पादयामास । क्षेमङ्करैः क्षेमकारैः । 'क्षेमप्रियमद्रेऽण्च' इति खच्प्रत्ययः । 'अरुर्द्विष–' इति मुमागमः । वारिधरैर्मेघैरवार्षि । वज्राद्युपप्लवरहिता समयानुकूला वृष्टिरभूदित्यर्थः । सुखाकुर्वन्तीति सुखाकरैरनुकूलवाहिभिः । 'सुखप्रियादानुलोम्ये' इति डाच् । ततः पचाद्यच् । गन्धवहैः समीरैरवाहि । क्रियासमुच्चयः ॥ ३७ ॥

इति प्रकटमङ्गलैः सकलदिग्विकीर्णै रयै-
रथो रभसकर्षिताऽभ्युदितयोस्तपोराशिभिः ।

विभूतिरनपायिनी भगवतोस्तयोराश्रमम्
भवार्णवमहातरीरववरीतुकामाऽजनि ॥३८॥

इति सदानन्दकृतौ नरनारायणीये काव्ये द्वितीयः सर्गः ॥२॥

अथेति पूर्वोक्तप्रकारेण प्रकटमङ्गलैः सकलदिग्विकीर्णैः सर्वासु दिक्षु व्याप्तैः रयैर्वेगगामिभिः । अभ्युदितयोः समिद्धयोस्तयोर्भगवतोर्नरनारायणयोः तपोरश्मिभिस्तपःकिरणरज्जुभिः रभसेन वेगेन कर्षिताऽऽकृष्टाऽनपायिनी अविनाशिनी भवार्णवमहातरीः संसारसागरमहानौकास्वरूपिणी विभूतिः सरस्वत्यादिरैश्वरी सम्पत् अववरीतुकामाऽवतर्तुमना अजनि । 'तुम्काममनसोरपि' इति मकारलोपः । 'दीपजन-' इति चिण् । 'जनिवध्योश्च' इति वृद्धिनिषेधः । पृथ्वीनामकं छन्दः ॥ ३८ ॥

इति श्रीसदानन्दसूनुवाणीविलासकृतायां दिग्दर्शिनीसमाख्यायां नरनारायणीयकाव्यव्याख्यायां द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः ।

---

विभूतिमवतारयति—

ओङ्कारमानसमरालवधूरुदारा
सम्फुल्लशुभ्रसरसीरुहतारहारा ।
स्वच्छन्दकुन्दकुसुमोज्ज्वलदन्तपङ्क्ति-
र्वाग्देवताऽथ ददृशे भुवमुत्तरन्ती ॥ १ ॥

अथ ओङ्कारमानसम् ओंकाररूपं मानसं सरः तत्र मरालवधूः हंसी । रूपकम् । सम्फुल्लानि विकसितानि शुभ्राणि सरसीरुहाणि पद्मानि यत्रैवंविधस्तारः शुद्धो हारो यस्याः सा। स्वच्छंदं कुन्दकुसुमोज्ज्वला दन्तपङ्क्तिर्यस्याः सा तथोक्ता वाग्देवता सरस्वती भुवं तदाश्रमभूमिं प्रति उत्तरन्ती ददृशे । कर्मकर्तरि लिट् ।

वसन्ततिलकं वृत्तम्–'उक्तं वसन्ततिलकं तभजा जगौ गः' इति लक्षणात् ॥ १ ॥

इष्टश्रुतिं स्वतनयामिव सप्ततन्त्री-
मुत्संगसङ्गिसकलावयवां दधाना ।
तुम्बीनितम्बरुचिरां मधुरं क्वणन्तीम्
दत्तावलम्बमनुरक्तकरद्वयेन ॥ २ ॥

उत्सङ्गसङ्गिनः सकला अवयवा यस्यास्तां तुम्बीनितम्ब इवेत्युपमितसमासः । तेन रुचिरां मधुरं क्वणन्तीं अतएव इष्टश्रुतिं सप्ततन्त्रीं वीणां अनुरक्तेन तदासक्तेन करद्वयेन दत्तोऽवलम्बो यस्मिन् कर्माणि तद्यथा स्यात्तथा स्वतनयामिव दधाना धारयन्ती ॥ २ ॥

रत्नप्रभाकिरकिरीटतटान्तचूडा-
चन्द्रेण सान्द्रकिरणेन विरोचमाना ।
सौवर्णतन्तुनिकरेण मनोहरेण
सौभाग्यभूमिरिव जङ्गमकल्पवल्लिः ॥ ३ ॥

किरति क्षिपतीति किरः । कॄ विक्षेपे कप्रत्ययः । रत्नप्रभानां प्रत्युप्तरत्नकान्तीनां किरस्य किरीटतटस्याऽन्ते यश्चूडाचन्द्रः आपीडरूपश्चन्द्रः तेन विरोचमाना शोभमाना सौभाग्यभूमिः सौभाग्यस्थली मनोहरेण सौवर्णेनेव तन्तुनिकरेण प्रतानसमूहेन विरोचमाना जङ्गमा सञ्चारिणी कल्पवल्लिः कल्पलता सा इवोपलक्षिता । उत्प्रेक्षानुप्राणितोपमा ॥ ३ ॥

हंसेन मारकतकुण्डलमण्डितोद्य-
देणाङ्कगण्डयुगमण्डनमञ्जुलश्रीः ।
पूरेण सौरसरितेन तुलां गतेन
श्वेतच्छदेन चलितच्छदमुह्यमाना ॥ ४ ॥

मारकतकुण्डलेन मरकतमणिमयावतंसेन मण्डितस्य कृतशोभस्याऽतएवोद्यत उदीयमानस्य एणाङ्कस्य मृगाङ्कस्य चन्द्रस्येव गण्डयुगमण्डलस्य मञ्जुला श्रीर्यस्याः सा । सौरसरितेन सुरसरित्सम्बन्धिना पूरेण प्रवाहेण तुलां साम्यं गतेन प्राप्तेन श्वेतच्छदेन हंसेन वाहनेन कर्त्रा चलितच्छदं यथा स्यात्तथा उह्यमाना धार्यमाणा ॥ ४ ॥

रत्नावतंसचपलाचलितैर्विलस्यद्-
धम्मिल्लभारनवनीरदराजिरम्या ।
तापापनोदनपटुं दधती विलासं
द्यौसन्निभा सुकवितामृतवर्षणेन ॥ ५ ॥

रत्नावतंसो रत्नमयकुण्डलं स एव चपला विद्युत् तस्याश्चलितैश्चाञ्चल्यैर्विलस्यन् यो धम्मिल्लभारः केशपाशः स एव नवनीरदराजिः नवमेघघटा तया रम्याऽतएव द्यौसन्निभाऽऽकाशतुल्या सुकवितामृतवर्षणेन सुकविताजलवृष्ट्या तापापनोदनपटुं आध्यात्मिकादितापत्रयोष्णतापहरणनिपुणं विलासं चेष्टां दधती । रूपकानुप्राणितोपमेयम् ॥ ५ ॥

मीमांसया तिलकितोपनिषद्गुणेन
सच्चूर्णकुन्तलवती धृतवर्णमाला ।
शब्दार्थभूषणविभूषितपाददेशा
साङ्ख्येन मानसवती निगमागमाङ्गी ॥ ६ ॥

मीमांसा पूर्वमीमांसा कर्मजिज्ञासामयी उत्तरमीमांसा ब्रह्मज्ञानप्रतिपादनी च तया तिलकिता सञ्जाततिलका । उपनिषद्गणेन सच्चूर्णकुन्तलवती । धृता वर्णमाला ऊनपञ्चाशद्वर्णमाला यया सा वर्णमालया मालिनीत्यर्थः । शब्दार्थभूषणाभ्यां शब्दार्थालङ्कारा-

भ्यां यमकोपमादिरूपाभ्यां विभूषितो नूपुरितः पाददेशो यस्याः सा । साङ्ख्येन सृष्टिसंहारक्रमबोधकेन योगशास्त्रविशेषेण मानसवती हृदयालुः । इत्थं निगमा इतिहासपुराणादिरूपाः आगमा वेदादयश्च त एवाऽङ्गानि यस्याः सा तथोक्ता ॥ ६ ॥

कारुण्यपूरपरिपूर्णतमायताक्षी
सङ्कीर्णसान्द्रमकरन्दरसं वहन्ती ।
व्याकोशकोशकुमुदं हि कुमुद्वतीयम्
भ्रेजे नभःसरसि शारदिकेव दिव्या ॥ ७ ॥

कारुण्यपूरेण करुणाप्रवाहेण परिपूर्णतमं अक्षि नयनं यस्याः सा तथोक्तेयं सरस्वती नभःसरसि आकाशसरोवरे सङ्कीर्णः सान्द्रो मकरन्दरसः परागो यत्रैवंविधं व्याकोशकोशं स्फुटितकुड्मलं च तत् कुमुदं तदाख्यं पुष्पं वहन्ती । शरदि जाता शारदिका दिव्या कुमुद्वती कुमुदिनीव भ्रेजे रेजे । ' कुमुदनडवेतसेभ्यो ड्मतुप् ' इति ड्मतुप्प्रत्ययः ॥ ७ ॥

उद्यत्कपोलतलकीर्णकलाकलाप-
मन्दस्मितच्छलमरालविगाह्यमानम् ।
आबद्धदन्तमुकुलं मुखपुण्डरीकम्
सारस्वतं छलितचान्द्रमसांशुजालम् ॥ ८ ॥

उद्यत् स्मितेनोन्नमद् यत्कपोलतलं गण्डस्थलं तत्र कीर्णः प्रसृतः कलाकलापः कान्तिमण्डलं यस्य तद् । वृत्त्यनुप्रासः । एवंविधं यद् मन्दस्मितं ईषद्धासः तस्य छलेन व्याजेन मरालेन हंसेनैव विगाह्यमानं विगाढम् । आबद्धानि दन्तमुकुलानि यत्र तदेवंविधं सारस्वतं सरस्वत्या इदं मुखपुण्डरीकं मुखकुमुदं छलितं कान्तितिरस्कृतं चान्द्रमसं अंशुजालं किरणसमूहो येन तत्तथाविधं लक्ष्यते स्मेति शेषः । अपह्नुतिगर्भं रूपकमुपमा चाऽत्र ॥ ८ ॥

शान्ताकृतिस्तदनुदानवदारिदारा
लक्ष्मीः सुलक्षणविलक्षणलक्ष्यरूपा ।
लक्ष्मीपतित्वमनयोरुभयोर्विधातु-
मालक्ष्यताऽत्र तपसोरपि भूरिभावात् ॥ ९ ॥

तपसोस्तपस्विनोरपि अनयोर्नरनारायणयोः भूरिभावात्प्रभावातिशयाद् हेतोः उभयोरेव तयोर्लक्ष्मीपतित्वं विधातुं तदनु वाग्देवतावतरणानन्तरं शान्ताकृतिः। सुलक्षणमपि विलक्षणं लक्ष्यमिति विरोधः। तथाविधं रूपं यस्याः सा तथोक्ता दानवदारिदारा लक्ष्मीः न तु गङ्गेतिभावः । आलक्ष्यताऽवतरन्ती ददृश इत्यर्थः ॥ ९ ॥

रौक्मै रथैरनुलसद्गजवाजिराजी
राजीवरत्नकनकस्रजमादधाना ।
दन्तावलीयतपनीयघटाम्बुधारा-
निर्वर्तिताप्लवविधिर्वियदम्बुराशौ ॥ १० ॥

अनुलसन्ती गजवाजिराजिः करितुरगपङ्क्तिर्यस्याः सा । रौक्मैः सौवर्णै रथैश्चोपलक्षिता । राजीवानि कमलानि रत्नानि मणयः कनकानि सुवर्णानि च तन्मयीं स्रजं मालामादधाना । तथा वियदम्बुराशौ आकाशसमुद्रतीरे दन्तावलैर्हस्तिभिर्गृहीताः दन्तावलीयाः । शैषिकश्छप्रत्ययः । तथाविधा ये तपनीयघटाः स्वर्णकलशाः तेषां अम्बुधारया सुधोदधारापातेन निर्वर्तितः सम्पादितः आप्लवविधिः स्नानविधिर्यस्याः सा तथोक्ता ॥ १० ॥

श्वेतातपत्रपरिपाण्डुरिमावदाता
भास्वद्विकस्वरवरासनसन्निविष्टा ।
हैमांशवीं श्रियमथांऽऽशुमतीं वहन्ती
रेजे रमाऽङ्गलतया युगपज्ज्वलन्ती ॥ ११ ॥

श्वेतस्याऽऽतपत्रस्य यः परिपाण्डुरिमा धावल्यम् । भावे इमनिच् । तेनाऽवदाता उपरित उद्योतिता, भास्वान् सूर्य्यस्तद्वत् विकस्वरं यदासनं सौवर्णं पीठं तत्र सन्निविष्टा । अधस्तात्तत्कान्तिविच्छुरितेति भावः । अतएव अङ्गलतया युगपत् सममेव हैमांशवीं चान्द्रीं आंशुमतीं सौरीं च श्रियं शोभां वहन्ती रमा रेजे शुशुभे । उपमालङ्कारः ॥ ११ ॥

धीह्रीदयाप्रभृतिभिः परिचारिकाभिः
सम्प्रश्रयप्रणयसौमनसप्रसादैः ।
तैरात्मजैरविचलैः परितः परीता
त्रैविष्टपाभरणमेकमनन्तशोभम् ॥ १२ ॥

धीर्बुद्धिः ह्रीर्लज्जा दया करुणा च तत्प्रभृतिभिस्तत्प्रकाराभिः परिचारिकाभिर्दासीभिः । तथा तैः प्रसिद्धैः सम्प्रश्रयो विनयः, प्रणयः प्रेमविशेषः, सौमनसं मनसो नैर्मल्यं, प्रसादः प्रसन्नता, तैरविचलैः स्थिरैरात्मजैरात्मोत्थैर्भावैः परितः समन्तात् परिवृताऽतएवाऽनन्तशोभं एकं मुख्यं त्रैविष्टपाभरणं त्रिभुवनभूषणभूता ॥ १२ ॥

प्रत्यक्षविष्णुपदविस्तरलम्बमाना
पद्मालयारतिविलासनिमित्तदोला ।
सौरभ्यमत्तमधुलिण्मधुपानभूमि-
रभ्राजतैतदनु वैष्णववन्यमाला ॥ १३ ॥

एतदनु श्रियोऽवतरणानन्तरम् प्रत्यक्षं विष्णुपदविस्तरे आकाशमार्गविस्तारे लम्बमाना । हरिपादलम्बनञ्च ध्वन्यते । 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।' इत्यमरः । पद्मालया श्रीः तस्याः यो रतिविलासः प्रीतिपूर्वकविलासस्तन्निमित्ता दोला दोलेवोपलक्षिता तथा सौरभ्येण मत्तानामपि मधुलिहां भृङ्गाणां

मधुपानभूमिः पुष्परसपानप्रदेशभूता वैष्णवी या वन्यमाला वनमाला साऽचाऽभ्राजताऽऽकाशादवतरन्ती ददृशे इत्यर्थः ॥ १३ ॥

आकाशवारिधिशयस्य ततः सुरारे-
स्तुन्दं विदार्य्य शयधार्य्यमुदीय्यमानम् ।
आपूर्य्यमाणमनिलेन नदन् मुरारे-
र्व्यद्योतत द्युरमितद्युति शङ्खरत्नम् ॥ १४ ॥

ततो मालावतरणानन्तरं आकाशवारिधिशयस्याऽऽकाशसमुद्रशायिनः सुरारेः पञ्चजनाख्यस्य तुन्दमुदरं विदार्य्य विभिद्य उदीयमानं अनिलेन नभस्वताऽऽपूर्य्यमाणमतएव नदन् ध्वनन् मुरारेर्हरेः शयधार्य्यं करग्राह्यं अमितद्युति शङ्खरत्नं पाञ्चजन्यं द्युः आकाशे व्यद्योतत । उत्प्रेक्षा ॥ १४ ॥

साहाय्यसमम्पादिति नैव पुनः कथञ्चित्
लभ्येत तद्द्रुतमवातरत प्रकामम् ।
आकारणामिति समाचरदेष नादै-
स्तारैः पुरः प्रति सखीननुगन्तुमिच्छून् ॥ १५ ॥

पुरोऽग्रतः प्रस्थितः एष शङ्खः कर्ता । इतीत्थंरूपा साहाय्यसम्पत् सयात्रसम्पत्तिः पुनः कथंचिन्नैव लभ्येत यथेदानीमिति भावः । तत् द्रुतं अवातरत समागच्छत । इतीत्थंरूपैस्तारैरुन्नतैर्नादैः करणैः अनुगन्तुमिच्छून् सखीन् सुदर्शनादीन्प्रति आकारणामाह्वानम् । 'हूतिराकारणाऽऽह्वानम्' इत्यमरः । समाचरच्चकार प्रकाममित्युत्प्रेक्ष्यते ॥ १५ ॥

पद्मन्तु षट्पदवधूभिरुदीर्णरागम्
चक्रञ्च तापजनकं तदसह्यवेगम् ।
हित्वा द्वयं सपदि तावदियं समुत्का
कौमोदकी तदनुमोदकरी प्रतस्थे ॥ १६ ॥

पद्मन्तु षट्पदवधूभिर्भ्रमरीभिः सहोदीर्णरागं प्रकटितासक्ति, चक्रं सुदर्शनं च तापजनकं असह्यवेगश्चाऽस्ति । तत् तस्मात्कारणात् द्वयमेव सङ्गानर्हं हित्वा त्यक्त्वा तावत्प्रथमं सपदि तदनुमोदकरी शङ्खवचनानुमोदनकारिणी । तदनु इति वा पदच्छेदः । समुत्का समुत्सुका कौमोदकी नाम गदा प्रतस्थे ॥ १६ ॥

तामन्वधावदथ सन्ततबद्धमुष्टि-
रिष्टारिसंहृतिविधौ कृतपक्षपाताम् ।
पोतः प्रसूतिमिव नन्दकचन्द्रहासः
पर्य्याक्षिपन् वियति वैद्युतवल्लिभासः ॥ १७॥

अथ गदावतरणानन्तरं सन्ततबद्धमुष्टिरविच्छिन्नसम्बद्धत्सरुः नन्दकचन्द्रहासः नन्दकाख्यः खड्गः वियति वैद्युतवल्लिभासः पर्य्याक्षिपन् तिरस्कुर्वन् इष्टारिसंहृतिविधौ कृतपक्षपातां तां गदां सन्ततबद्धमुष्टिः पोतः शिशुः प्रसूतिं मातरमिवाऽन्वधावत् ॥ १७॥

पद्मं ततो द्युवनितामुखपद्ममेकम्
माद्यद्विलोचनविलासिमिलिन्दमालम् ।
किञ्जल्कदन्तकलितं मृदुनालकण्ठम्
सिद्धैः सविस्मयमुदीक्षितमिद्धनेत्रैः ॥ १८ ॥

ततो नन्दकावतरणानन्तरं माद्यन्ती विलोचनविलासिनां नेत्रतुल्यानां मिलिन्दानां माला पंक्तिर्यत्र तत् किञ्जल्कदन्तकलितं मृदु नालं मृणालं कण्ठ इव यस्य तद् अतएव इद्धनेत्रैः सिद्धैः सविस्मयं साश्चर्य्यं उदीक्षितं दृष्टं एकमपरं द्यौरेव वनिता द्युवनिता । 'दिव उत्' इत्युकारोऽन्तादेशः । तस्याः मुखपद्मं मुखकमलं पद्मं प्रादुरभूदिति शेषः । रूपकोत्प्रेक्षालङ्कारौ सङ्कीर्णौ ॥ १८ ॥

चक्रं परिभ्रमपरं व्यरुचत्ततोऽभ्रे
विष्वग्ज्वलत्करविकस्वरदीपिकाभिः ।

विद्योतिताखिलककुप्चयचक्रवालम्
दृष्ट्वा स्वयं तदवशेषमिवाऽऽजिघृक्षु ॥ १९ ॥

ततः पद्मावतरणानन्तरं परिभ्रमपरं परिभ्रमणशीलं, विष्वक् समन्तात् ज्वलन्तश्च ये कराः किरणाः हस्ताश्च त एव तत्र वा याः विकस्वरदीपिकास्ताभिः विद्योतितं प्रकाशितं अखिलककुप्चयचक्रवालं सर्वदिक्समूहमण्डलं येन तत्तथोक्तं चक्रं सुदर्शनं कर्तृ । स्वयं तदवशेषं उपयुक्तरत्नावशिष्टभागं दृष्ट्वाऽऽजिघृक्षु आहर्तुमिच्छु इवेत्युत्प्रेक्षा । अभ्रे आकाशे व्यरुचत् । द्युतादित्वादङ् । 'द्युद्भ्यो लुङि' इति परस्मैपदम् ॥ १९ ॥

रत्नान्तराण्यपि हरेर्हृदयङ्गमानि
श्रीकामधेनुहरिचन्दनसन्निधानि ।
सङ्कीर्णतामसमितान्यमितद्युतीनि
तद्व्योमवारिधितलाद्भृशमाविरासन् ॥ २० ॥

श्रीकामधेनुः सुरभिः हरिचन्दनः कल्पवृक्षभेदः तत्सन्निधानि तत्प्रकाराणि अमितद्युतीनि सङ्कीर्णतां संघट्टदोषमसमितानि अनुपगतानि हरेर्हृदयङ्गमानि मनोहराणि रत्नान्तराण्यन्यानि रत्नान्यपि तद्व्योमवारिधितलाद् भृशमाविरासन् ॥ २० ॥

सौभाग्यसम्पदिव सच्चरितं सुचारु-
र्नव्योत्तरोत्तरविवृद्धिपरप्रचारा ।
शब्दार्थसम्पदिव सत्कविमाप्तबोधम्
कीर्तिर्नृपालमिव नीतिचणं शरण्यम् ॥ २१ ॥
सम्भिन्नवर्णमधुराकृतिशालिनीयम्
दिव्या विभूतिरभिमौनवनं पपात ।

कल्पप्रसूनवरवृष्टिरिव प्रभूता
श्रेष्ठैरदोगुणगणैरिह सम्प्रहूता ॥२२॥युग्मम्॥

सुचारुर्नव्या नूतना उत्तरोत्तरं विवृद्धिपरः प्रचारो यस्याः सा तथोक्ता सौभाग्यसम्पत् सच्चरितं मनोवाक्कायकर्मभिः सदाचरणशीलं पुरुषमिव, तथा पूर्वोक्तविशेषणसम्पन्ना शब्दार्थसम्पत् आप्तबोधं सत्कविमिव, कीर्तिः शरण्यं नीतिचणं नृपालमिव ॥ २१ ॥ अदोगुणगणैः नारायणीयगुणवृन्दैरिहाश्रमे सम्प्रहूता समाहूता प्रभूता प्रचुरा कल्पप्रसूनवरवृष्टिः कल्पपुष्पवृष्टिरिवेत्युत्प्रेक्षा । सम्भिन्नवर्णमधुराकृतिशालिनी इयं दिव्या विभूतिः । मौनं मुनिसम्बन्धि यद्वनं बदरीवनं तदभिपपात । मालोपमालङ्कारः ॥ २२ ॥

स्वैरं तपस्तनिमशालिनि वर्ष्मणीयम्
नारायणस्य सनरस्य विवेश तूर्णम् ।
कल्पान्तगीर्णभुवनस्य यथावकाशम्
तस्मिन् ममावपि यथापदमंशतोऽसौ ॥२३॥

इयं विभूतिः कल्पान्तगीर्णभुवनस्य सनरस्य नारायणस्य तपसा यस्तनिमा कृशत्वं तच्छालिनि वर्ष्मणि शरीरे स्वैरं स्वच्छन्दं विवेश। अंशतोऽवतीर्णाऽसौ विभूतिस्तस्मिन्नारायणे यथापदं यथास्थानं यथावकाशं संघट्टदोषरहितं च ममावपि ॥ २३ ॥

सान्निध्यमस्य सततं समचीक्लृपन् त-
द्दिव्यायुधानि सुरवैरिनिराकरिष्णोः ।
छायासुखाय बदरीतरुसन्निवेशा
बभ्राज प्रच्छदपटीव सुरद्रुवाह्लिः ॥ २४ ॥

तद्दिव्यायुधानि सुदर्शनादीनि सुरवैरिनिराकरिष्णोः दानव-

विध्वंसिनः अस्य नारायणस्य सान्निध्यं सामीप्यं सततं समचीक्लृपन् चक्रुः। सुरद्रुवल्लिः कल्पलता चाऽस्य छायासुखाय प्रच्छदपटी तिरस्करिणीव बदरीतरुर्नरनारायणश्रिततलस्तत्र सन्निवेशो यस्याः सा तथोक्ता सती बभ्राज । बभ्राज प्र-इत्यत्र संयोगादेर्गौरवं बोध्यम् । 'प्रह्रेति वा-' इति पिङ्गलमुनेर्विकल्पविधायकसूत्रप्रामाण्यात् ॥ २४ ॥

सिक्ता कवोष्णपयसा सुरमाहयाऽसौ
वल्मीकलीढसकलावयवाऽपि मूर्तिः ।
भेजे विकाशमभितोऽभ्रघटाम्बुसेकै-
र्नैदाघिकीव विरसा व्रततिर्वरिष्ठा ॥ २५ ॥

वल्मीकेन सजन्तुकया वामलूरमृत्तिकया लीढाः सकला अवयवाः यस्याः सा तथोक्ताऽपि असौ नरनारायणीया मूर्तिः सुरमाहया कामधेन्वा कर्त्र्या कवोष्णपयसा मन्दोष्णक्षीरेण सिक्तोक्षिता सती अभ्रघटाम्बुसेकैर्मेघघटाजलवृष्टिभिः नैदाघिकी ग्रीष्मकालीना विरसा शुष्का वरिष्ठा व्रततिर्लता इवाऽभितो विकाशं भेजे ॥ २५ ॥

तां तापसीं किल विभूतिमुदीक्ष्य कश्चित् (रूढः)
प्राप्तप्रसत्तिरपि देववरादवाप ।
कालुष्यकं सुचिरकालतपोन्तहेतु-
दुर्भेदभूरिकवचोऽग्रचरोऽसुराणाम् ॥ २६ ॥

देववरात् सूर्यवरप्रदानाद्धेतोः सुचिरकालं दशवर्षसहस्राणि सम्भृतं यत्तपः तदेवाऽन्तहेतुर्विनाशकारणं येषां ते तथाविधा दुर्भेदा भूरिकवचा बहुवारबाणा यस्य स तथोक्तः। अतएव प्राप्तप्रसत्तिर्लब्धप्रसादोऽपि असुराणां निवातकवचानां अग्रचरोऽग्रेसरः कश्चिद्दानवः सहस्रकवच इति प्रसिद्धः तां पूर्वोक्तां तापसीं

नरनारायणतपःप्रभूतां विभूतिमुदीक्ष्य स्वतपःप्रभावात्समालोच्य कालुष्यकं कलुषतां विक्षोभमिति यावत् । अवाप प्राप ॥ २६ ॥

निर्घोषः स्वयमुदियाय दुन्दुभीनाम्
दिव्यानां सुरविसरेऽभयं विवृण्वन् ।
निर्घातो दितितनयस्य सैव जज्ञे
वित्रासाद्धृदयकपाटपाटनेन ॥ २७ ॥

स्वयमनाहतानामित्यर्थः । दिव्यानां दिवि भवानां दुन्दुभीनां भेरीणां निर्घोषः शब्दः सुरविसरे देवसमूहेऽभयं विवृण्वन् प्रकटयन् उदियाय उदचरत् । स एव दुन्दुभिनिर्घोषः । 'सोऽचि लोपे–' इति सुलोपः । दितितनयस्य सहस्रकवचस्य वित्रासाद् हृदयकपाटपाटनेन हेतुना निर्घातो हि उल्कापातशब्दो जज्ञे जातः । ईर्ष्यया तस्य हृदयं देहे इति भावः । युद्धोद्युक्तस्य तस्य प्रारम्भिकमशकुनमेतदेवेत्यर्थः ॥ २७ ॥

आलोकः स्फुटमुदगाद्दिगाननेभ्यः
सिद्धौघैः श्रवणपुटेन पीयमानः ।
आत्मीयं नियतमनात्मनीनमारा-
दाह्वानं हरिसमराय तं स मेने ॥ २८ ॥

सिद्धौघैः श्रवणपुटेन पीयमानः सादरं श्रूयमाण इत्यर्थः । आलोको जयशब्दः दिगाननेभ्यो दिङ्मुखेभ्यः स्फुटमुदगादुच्चचार । तमेव जयशब्दं स दानवः न आत्मने हितं अनात्मनीनमात्मीयं आत्मनः सम्बन्धि आरात् हरिसमराय निमित्तायाऽऽह्वानं सस्पर्धाकारणां मेने । ईर्ष्यानुभावोऽयम् । मरिष्यमाणानां हि चित्तवैप्लवं भवतीति भावः ॥ २८ ॥

आतेनेऽदितिसुतदीर्घिकाजलार्द्रै-
रामोदोऽमरकुसुमैस्तपोवनेऽस्मिन् ।

तैरस्य प्रखरतराग्निबाणवर्ष-
व्यापारभ्रम उदपादि चित्तवृत्तौ ॥ २९ ॥

अदितिसुतदीर्घिकाजलार्द्रैराकाशगङ्गाजलक्लिन्नैरमरकुसुमैर्दिव्य-पुष्पैः अस्मिन्नरनारायणीये आश्रमे आमोदः सुगन्धविशेष आतेने विस्तारितः । तैः पुष्पवर्षैरस्य दानवस्य चित्तवृत्तौ प्रखर-तराग्निबाणवर्षव्यापारभ्रमः कश्चिदयं कुतश्चिदग्निबाणवर्षं करोतीति शङ्का उदपादि उत्पादिता । अत्राऽपीर्ष्यानुभावोऽयम् ॥२९॥

विक्रान्तः क्रमजवनो वरावलेपाद्
युद्धार्थी स रभसबद्धवारबाणः ।
आपेदे हरिबदरीतपोवनानि
तन्वानस्तरलकुरङ्गविष्किराणि ॥ ३० ॥

वरावलेपाद् वरदानहेतुकगर्वात् युद्धार्थी नरनाराणयोर्युद्धाभि-लाषी अतएव विक्रान्तो रभसेन वेगेन बद्धः वारबाणः कवचो येन स तथोक्तः स दानवः क्रमैः पादविक्षेपैर्जवने त्वरते इति तथा-विधः सन् हरिबदरीतपोवनानि नरनारायणतपोवनानि । तरला भयेन चञ्चलाः कुरङ्गा मृगजातयः विष्किराः पक्षिजातयश्च येषु तानि तथोक्तानि तन्वानः कुर्वाणः आपेदेऽभ्याजगाम ॥ ३० ॥

तैरेतैस्त्रिभुवनजागरूकरूढैः
सायामा नयनसरोजसङ्गिनीयम् ।
रात्रीव प्रलयकरीशयोगनिद्रा-
मुद्रा सा विपरिणतिं शनैरियाय ॥ ३१ ॥

इति श्रीसदानन्दकृतौ नरनारायणीये तृतीयः सर्गः ॥ ३ ॥

तैः पूर्वोक्तैरेतैर्हेतुभिर्दिव्यदुन्दुभिध्वनिजयशब्दपुष्पवृष्टिवनमृ-गादिविप्लवरूपैः । साऽनिर्वचनीया ईशस्य नारायणस्य योगनिद्रा-मुद्रा शनैर्मन्दं मन्दं विपरिणातिं परिवृत्तिं इयाय प्राप । का इव

प्रलयकरी रात्रिरिव । कीदृशी सा त्रिभुवने जागरूका रूढिर्विख्यातिर्यस्या सा । पुनः कीदृशी नयनसरोजसङ्गिनी भगवन्नेत्रकमलसम्बन्धिनी तथा सायामा सविस्तारा च । उपमालङ्कारः । अन्तिमे श्लोकपञ्चकेऽस्मिन् प्रहर्षिणीवृत्तम्–'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति लक्षणात् ॥ ३१ ॥

इति श्रीसदानन्दसूनुवाणीविलासकृतायां नरनारायणीयव्याख्यायां दिग्दर्शिनीसमाख्यायां तृतीयः सर्गः ॥ ३ ॥

# चतुर्थः सर्गः ।

यदसाम्यसमाधियोगनिद्रा-
परिणामेन समुन्मिमील चक्षुः ।
विवृतावरणं हरेश्चिरेण
तदिदं दानवधामपानपात्रम् ॥ १ ॥

यत् हरेर्नारायणस्य चक्षुर्नयनं कर्तृ । असाम्याऽनुपमा या समाधियोगनिद्रा तस्याः परिणामेन समुन्मिमील विशदमुन्मिषितम् । तदिदं नयनं चिरेणाऽद्य हरेर्दानवधामपानपात्रं येन पात्रेण दानवानां तेजः पीयते तत्पात्रमित्यर्थः । विवृतावरणं विगतावरणं सञ्जातम् । निदर्शनालङ्कारः । अत्र सर्गे औपच्छन्दसिकं वृत्तम् ॥ १ ॥

ददृशे सहसाऽथ शैलमूर्ध्नोऽ-
वतरन्ती दितिजेन्द्रवाहिनी या ।
कलुषा निजमायया प्रवृत्ता
महती प्रावृषिकी नदीव सद्यः ॥ २ ॥

अथ सहसा नयनोन्मीलनसमकालमेवेत्यर्थः । शैलमूर्ध्नो हिमालयशृङ्गादवतरन्ती दितिजेन्द्रवाहिनी दानवसेना ददृशे मुनिना

इति शेषः । या सेना सद्यो निजमायया दानवस्वमायया प्रवृत्ता उत्पन्ना कलुषा क्षुब्धा महती महाविस्तारा प्रावृषिकी प्रावृट्कालीना । ठक् । नदीवोपलक्षिता । उपमानुप्राणिता भ्रान्तिः ॥ २॥

प्रचलद्भुजवीचिभीषणौघा
　मुहुरावर्तितवीरनीरराशिः ।
क्वचिदुन्नमितोग्रनक्रवक्त्रा
　स्फुरितोत्तुङ्गतिमिङ्गिलप्रकाशा ॥ ३ ॥

कीदृशी सा सेनानदी । प्रचलन्तो भुजा एव वीचयस्तरङ्गा यस्यास्तथा भीषणो भयङ्कर ओघः पुञ्जोऽथवा प्रवाहो यस्याः सा तथोक्ता । पुनः कीदृशी मुहुरावर्तित आवर्त इवोपलक्षितः वीराणां नीराणामिव राशिर्यत्र तथोक्ता । पुनः कीदृशी क्वचित्स्थले उन्नमितानि उग्राणां नक्राणामिव वक्त्राणि मुखानि यत्र । पुनः कीदृशी स्फुरिता गर्वेण विवृत्ता ये उत्तुङ्गा उन्नताङ्गास्त एव तिमिङ्गिलप्रकाशास्तिमिङ्गिलसंकाशा यत्र ॥ ३ ॥

तटकाननभीमसिंहनादाऽ-
　प्यभितो मत्तमतङ्गजावगाढा ।
रयपातितघोरगण्डशैला
　क्वचिदुत्खातमहामहीरुहौघा ॥ ४ ॥

तटे पार्श्वे यत्काननं वनं तत्र भीमो संक्रान्तत्वाद्भयङ्करः सिंहनादः क्ष्वेडारवः सिंहानां नादो वा यस्याः सा । तथोक्ताऽपि अभितः समन्तात् मत्तैर्मदोद्धतैर्मतङ्गजैर्हस्तिभिर्वन्यैः सैनिकैर्वाऽवगाढा । तथा रयेण वेगगमनेन हेतुना पातिता विपरिवर्तिता घोरा गण्डशैलाश्च्युतोपलविशेषाः यया सा । तथा क्वचिदुत्खातो महामहीरुहाणां ओघः पुञ्जो यया सा । उभयत्रापि साधुः ॥ ४ ॥

अनुकूलरथाङ्गबद्धनादाऽ-
ऽप्यवटेषु क्वचिदालयं प्रयान्ती ।
तरलोद्धतदिग्धहेतिजिह्वैः
कुटिलैः कालभुजङ्गमैः कराली ॥ ५ ॥

अनुकूलैरनुकूलगामिभिः अनुकूलं प्रतितीरं वा रथाङ्गैः रथचक्रैश्चक्रवाकैर्वा बद्धो नादो यस्याः सा, क्वचिदपि अवटेषु निम्नेषु गर्तेषु आलयं अदृश्यतां प्रयान्ती, तथा तरला उद्धताः दिग्धा विषदिग्धाश्च या हेतयः खड्गास्ता एव जिह्वाः एषां तैः कुटिलैर्जिह्मगामिभिः कालाः कृष्णवर्णा दानवास्त एव भुजङ्गमाः सर्पास्तैः कराली विकटा । गौरादित्वात् ङीप् ॥ ५ ॥

मदहुंकृतिझंकृतिप्रकारा
रववित्रासितवन्यजन्युजातिः ।
क्वचिदुद्धतिशालिनी जवेन
विकटाटोपविवृत्तनेत्रमीना ॥ ६ ॥

मदेन या हुंकृतिर्हुङ्कारः सैव झंकृतिप्रकारो झंकारविशेषो यस्याः सा, रवेण निनदेन वित्रासिता वन्या जन्युजातिर्जन्तुसामान्यं यया सा, क्वचित्स्थलेषु जवेन उद्धतिशालिनी उत्प्लवमाना, तथा विकटेनाऽऽटोपेन विवृत्तानि नेत्राणि मीना इव यस्याः सा ॥ ६ ॥

उपकण्ठविशीर्णमुण्डमाला
भुजकल्लोलविलोलितैर्नटन्ती ।
परिवृत्तमहाट्टहासफेना
घननीहाराशिरोरुहैरहीना ॥ ७ ॥
कुटिला क्वचिदायता च ऋज्वी
क्वचिदायुक्तिरनेकधा विशीर्णा ।

दनुजेन्द्रमहामहीध्रमूलाऽ-
मरविद्वेषणसूदनार्णवान्ता ॥ ८ ॥

उपकण्ठे कण्ठस्य समीपे तीरे वा विशीर्णा लम्बमाना पतिता वा मुण्डमाला कपालमाला शवशिरःपंक्तिर्वा यस्याः सा, भुजकल्लोलविलोलितैः भुजमहातरङ्गोत्क्षेपणैर्नटन्तीवोपलक्षिता, तथा परिवृत्तो महाट्टहास एव फेनो यस्याः सा तथोक्ता, घना नीहारोपमा ये शिरोरुहाः केशाः पक्षे घननीहाराः शिरोरुहा इव तैः अहीना सहिता ॥ ७ ॥ क्वचित्कुटिला, क्वचित् ऋज्वी आयता विस्तीर्णा, क्वचिदायुक्तिः समन्तात्सम्बद्धा बद्धवेणी च, क्वचित् अनेकधा विशीर्णा प्रसृमरा , दनुजेन्द्रः सहस्रकवचः स एव महामहीध्रः महापर्वतः स एव मूलं मूलस्थानं कारणं वा यस्याः सा । तथा त्रिदशद्वेषणसूदनः सुरारिहन्ता नारायणः स एवाऽर्णवः समुद्रः स एवाऽन्तो मृत्युरवसानं वा यस्याः सा तथोक्ता । ददृशे इति पूर्वतः क्रियासम्बन्धः । रूपकोपमा । कुलकम् ॥ ८ ॥

गुरुगन्धवहेन मारुतेन
विकलीभूततपोवनेन तस्याः ।
खरशीकरवाहिना समन्ता-
न्मुनिकोपानलहेतिरादिदीपे ॥ ९ ॥

गुरुगन्धवहेनोग्रगन्धवाहिनाऽतएव विकलीभूतं तपोवनं यस्मात् तेन खरशीकरवाहिना तीक्ष्णजलकणवाहिना तस्याः सेनानद्याः मारुतेन मुखवायुना तरङ्गवायुना च मुनिकोपानलहेतिर्नारायणकोपाग्निज्वाला आदिदीपे ववृधे । अत्र गन्धवहेन मारुतेनेति पुनरुक्तवदाभासोऽलंकारः । शीकरवाहिना कोपानलवृद्धिरिति विरुद्धघटनारूपो विषमालंकारश्च वायोरतिशयद्योतनादतिशयोक्तिश्चेति त्रयाणां संसृष्टिः ॥ ९ ॥

सखानलगर्भगोत्रभेद-
प्रकटोद्गारनिभं गणप्रकीर्णा ।
पृतनाऽऽविरभूदभूतपूर्वा
लघु लीलातनुमत्तनूरुहेभ्यः ॥ १० ॥

लघु क्षिप्रं गणैः प्रकीर्णाऽऽकीर्णा पूर्वं न भूताऽभूतपूर्वाऽदृष्टपूर्वा पृतना सेना लीलातनुमत्तनूरुहेभ्यः नारायणलोमभ्यः सखः सशब्दो योऽनलगर्भगोत्रभेदः अग्निगर्भपर्वतस्फोटः तस्मात्प्रकटो य उद्गारोऽग्निप्रस्तराद्युद्गारस्तन्निभं तत्सदृशं यथा स्यात्तथाऽऽविरभूत् प्रादुरभूत् ॥ १० ॥

क्षणमुत्प्लवलङ्घिताम्बराऽसौ
प्रतिघावेशविवृत्तलोहिताक्षी ।
विरराज विकाशलम्भिताशा
मुनिवर्चोज्ज्वलनस्फुलिङ्गतुल्या ॥ ११ ॥

उत्प्लवेनोत्प्लुत्या लङ्घितमम्बरमाकाशं यया सा प्रतिघावेशेन कोपावेशेन विवृत्तानि घूर्णितानि लोहितानि चाऽक्षीणि यस्याः साऽतएव विकाशं लम्भिताः प्रापिता आशा दिशो यया साऽसौ गणसेना क्षणं मुनिवर्चोज्ज्वलनस्फुलिंगतुल्या रराज । अतिशयोक्तिरलङ्कारः ॥ ११ ॥

सहसाऽपससार सारकान्ति-
र्दिवि वैमानिकनाकयानपङ्क्तिः ।
विकुतूहलदर्शनाभिलाषः
सकलो दुःस्थितिमेति साध्वसेन ॥ १२ ॥

सारकान्तिः श्रेष्ठकान्तिः वैमानिकनाकयानपङ्क्तिः कौतुकवीक्षणाय विमानमधिरुह्याऽऽगतानां देवानां विमानपङ्क्त्य इत्यर्थः ।

दिवि सहसाऽपससाराऽपसृता । गणोत्प्लवनसंघट्टभयादिति भावः । तथा हि सकलः सर्व एव जनः साध्वसेन भयेन हेतुना विकुतूहलदर्शनाभिलाषः विगतकौतुकदर्शनौत्सुक्यः सन् दुस्थितिं आत्मरक्षणव्यग्रतामेति ॥ १२ ॥

झटिति क्षितिपीठमापपात
महसा वीरगणावलिर्ज्वलन्ती ।
वियदम्बुधिमध्यसम्भवेव
वडवापावकहेतिसन्ततिः सा ॥ १३ ॥

महसा तेजसा ज्वलन्ती सा नारायणीयाऽऽकाशमुत्प्लुता वीरगणावलिः वियदम्बुधिमध्यसम्भवाऽऽकाशसमुद्रमध्योद्भूता वडवापावकहेतिसन्ततिः वडवानलज्वालाविस्तृतिरिवेत्युत्प्रेक्षा झटित्यह्नाय क्षितिपीठं हैमवतभूपीठमापपाताऽवतीर्णा ॥ १३ ॥

पततां पततां सशब्दमुच्चैः
प्रतिचीत्कारविरावपूर्णरन्ध्रः ।
गिरिरायत कान्दिशीकतां स
प्रपदाघातविकम्प्रकः प्रकामम् ॥ १४ ॥

सशब्दं यथा स्यात्तथा पततां गणानां प्रपदाघातैः पादाहतिभिर्विकम्प्रकः कम्पनशीलोऽतएव पततां पक्षिणां उच्चैः प्रतिचीत्कारविरावः भयहेतुकचीत्कारप्रतिध्वनिस्तेन पूर्णानि रन्ध्राणि विवराणि यस्य सः तथोक्तः स हिमालयाख्यो गिरिः प्रकाममित्युत्प्रेक्ष्यते कान्दिशीकतां कां दिशं गच्छामीति भयशीलतामायत प्रापद्यत । अयतेर्लङ् । उत्प्रेक्षालङ्कारः ॥ १४ ॥

विविधस्वरविक्रमादिसंस्था
भृशमन्योन्यमपर्यवस्थिताऽसौ ।

श्रुतिवत् सकलाऽङ्गिनी तदङ्ग-
प्रभवा व्यासमियाय भूरिरूपा ॥ १५ ॥

विविधा ये स्वराः शब्दस्वराः उदात्तादयश्च विक्रमाः पराक्रमा विशिष्टा वा क्रमाः पदघनवल्लीजटादयः त एवादिसंस्था मुख्यस्थितिर्यस्याः सा सकला चतुःषष्टिकलोपेता अङ्गिनी गजतुरगाद्यङ्गवती शिक्षाकल्पाद्यङ्गवती च अन्योन्यमपर्य्यवस्थिताऽविरुद्धा । 'पर्य्यवस्था विरोधनम्' इत्यमरः । भूरिरूपा बहुरूपा तदङ्गप्रभवा नारायणाङ्गसम्भूताऽसौ भुवमवतीर्णा सेना श्रुतिवत् श्रुतिरिव व्यासं विस्तारमियाय । श्लेषानुप्राणितोपमालङ्कारः॥ १५॥

परिपूतकपर्दभारभुग्नै-
र्भसितोद्धूलिभिरुग्रपादपातैः ।
ननृते विकटाट्टहासमुच्चै-
रथ रुद्रैः प्लुतिलङ्घिताभ्रबिम्बम् ॥ १६ ॥

परिपूतः पवित्रो यः कपर्दभारो जटाजूटभारस्तेन भुग्नैः कुटिलग्रीवैः भसितोद्धूलिभिर्भस्मोद्धूलनपरैः उग्रः पादपातो येषां तै रुद्रैर्नारायणाङ्गसम्भूतैः प्लुतिभिर्लङ्घितं अभ्रबिम्बं आकाशमण्डलं यस्मिन् कर्मणि तद् यथा स्यात्तथा । एवं विकटोऽट्टहासो यस्मिन्कर्मणि तद् यथा स्यात्तथा च उच्चैर्ननृते ननटे । भावे लिट्॥ १६॥

त्रिभिर्विशेषकम्—

मनुजान्त्रकरोटिवस्त्रसासु
करलग्नासु कशेरुकासु चण्डान् ।
सृणिकायितसृक्वणीर्दधानान्
करवालाशुगशूलचापहस्तान् ॥ १७ ॥

**परिपूर्णविभीषिकोपचारान्**
**प्रबलैः पर्वतवाहिभिः शिरोभिः ।**
**वदनैर्ज्वलनं समुद्वमद्भि-**
**र्गरलं धूमधरञ्च लोचनाग्रैः ॥ १८ ॥**
**खरणः खुरणोवटीटविग्रान्**
**द्रुणसान् तुन्दिलमांसलान् तदीयान् ।**
**वलिरानभिगर्ज्जितान् गणानाम्**
**बलवत्यः प्रतिदध्वनुर्ध्वजिन्यः ॥ १९ ॥**

बलवत्यो गणानां ध्वजिन्यः सेनाः कर्त्र्यः । अन्त्राणि च करोटयः कपालाश्च वस्नसाश्च । मनुजानां अन्त्रकरोटिवस्नसासु तथा करलग्नासु कुतश्चिद्धस्तलग्नासु प्राप्तासु इति यावत् । कशेरुकासु मूर्धास्थिखर्परविशेषेषु सृणिकायिताः लालायिताः लुब्धा इति यावत् । याः सृक्कणीरोष्ठप्रान्तभागास्ताः दधानान्, तथा करवालाशुगशूलचापहस्तान् ॥ १७ ॥ प्रबलैः पर्वतवाहिभिः शिरोभिः, तथा ज्वलनमग्निं समुद्वमद्भिरुद्गिरद्भिर्वदनैर्मुखैः, एवं धूमधरं गरलं विषं उद्वमद्भिर्लोचनाग्रैश्च परिपूर्णः सुसम्पन्नो विभीषिकोपचारः विभीषिकोपयोग्युपकरणं येषां तान् तथोक्तान् ॥ १८ ॥ खरणसस्तीक्ष्णनासिकाः खुरणसः खुरसदृशनासिकाः अवटीटाश्चिपिटनासिकाश्च विग्रा विगतनासिकाश्च तान् । एवं द्रुणसान् वृक्षसदृशनासिकाञ्श्च काँश्चित् । तुन्दिलाः महोदराः मांसलाः पुष्टाश्च तान् । वलिरानाकेकरनयनान् तदीयान् दानवीयान् मायासैनिकान् अभिगर्ज्जितान् अभिमुखं गर्ज्जतः प्रतिदध्वनुः प्रतिजगर्ज्जुः । अत्र बीभत्सरौद्रवीररसाः ॥ १९ ॥

अथ युद्धोपक्रममाह—

**अथ बृंहितसिंहनादहेषा-**
**रवमिश्रै रणतूर्यतारनादैः ।**

बधिरीकृतदिग्गजैरगण्यै
रथघोषैश्च नभस्तलं ललङ्घे ॥ २० ॥

अथाऽन्योन्यगर्ज्जनानन्तरं बृंहितं करिगर्ज्जितं सिंहनादः क्ष्वेडारवः हेषारवस्तुरगहेषणश्च तन्मिश्रैः बधिरीकृतदिग्गजैर्दिगन्तव्यापिभिरित्यर्थः । अगण्यैः रणतूर्यतारनादैः रथघोषैः स्यन्दनगमनशब्दैश्च नभस्तलं ललङ्घे लङ्घितम् । लघि गतौ ॥ २० ॥

चतुरङ्गगतैरतुल्यलीलै-
रुदगाद्धूलिरुदग्रसंहतिर्या ।
रणयज्ञहुताशकीलिलीलाम्
सुमनःसिद्धमतामवोढ बाढम् ॥ २१ ॥

अतुल्यलीलैरनुपमविलासैः चतुरङ्गगतैः गजतुरगादिगतिभिः उदग्रसंहतिर्महासमूहा धूलिः रेणुरुदगादुदतिष्ठत् । या धूलिः बाढम् नितान्तम् सुमनोभिर्देवैः सिद्धैश्च मतां पूजितां रणयज्ञहुताशस्य समरे यागवह्नेर्यः कीलो ज्वाला । 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्यमरः । तस्य लीलां शोभामवोढ दधार । वहेर्लुङ् । उत्प्रेक्षा ॥ २१ ॥

कटितार्कपथा परस्परेण
पुटिता व्योमनि सा विधुन्तुदाभा ।
चलपक्षपतत्कुलाकुलाऽधो
वनवाहालिमतूतुलत्तलेन ॥ २२ ॥

परस्परेण कटितार्कपथा निरुद्धसूर्य्यमार्गा व्योमनि आकाशे पुटिता संश्लिष्टा । अतएव विधुन्तुदाभा राहुवत् दृश्या, अधश्चलपक्षाणि यानि पतत्कुलानि मांसगृध्नुपक्षिवृन्दानि बलाका वा यस्याः सा तथोक्ता सा धूलिः तलेन वनवाहालिं मेघमालामतूतुलत्तोलयामास तत्सादृश्यमवापेत्यर्थः । उपमा ॥ २२ ॥

५

परिवर्तयितुं प्रकाशहेतो-
रिव तां स्यन्दनकेतनैरसंख्यैः ।
उदलेखि नभोन्तरालमुच्चै-
र्मरुदाधूननमर्मरायमाणैः ॥ २३ ॥

मरुद्भिर्यदाधूननं विकम्पनं तेन मर्मरायमाणैर्मर्मरशब्दं कुर्वद्भिः असंख्यैः उच्चैरुन्नतैः स्यन्दनकेतनै रथध्वजैः कर्तृभिः प्रकाशहेतोः तां कटितार्कपथां धूलिं परिवर्तयितुमपनेतुमिव नभोन्तरालमुदलेखि ॥ २३ ॥

गुरुवेगविघूर्णिताक्षियुग्मै-
रतितिग्मानिलघोषितास्यघोणैः ।
तुरगैरुररीकृता गणास्ते
रणरोचिः प्रकरैरिहाऽदिनेशन् ॥ २४ ॥

गुरुणा वेगेन विघूर्णितानि अक्षियुग्मानि येषां तैः । अतितिग्मः प्रखरतरश्चासावनिलो मुखनिःश्वासस्तेन घोषिते आस्यं मुखं घोणा नासिका च येषां तैः तथोक्तैः तुरगैरश्वैरुररीकृता ऊढास्ते गणाः इह रणरोचिःप्रकरैः दानवैः सह योद्धुमुद्भावितप्रकाशप्रकरैः अदिनेशन् रविसादृश्यमापुः । आचारक्विबन्ताल्लुङ् ॥ २४ ॥

सलिलस्रुतिमद्धिमावलक्ष-
च्छविमातङ्गनगाधिरोहिणोऽन्ये ।
अतिमाघवनाश्रियो विरेजु-
र्नरनारायणतुल्यतामुपेताः ॥ २५ ॥

सलिलस्रुतिमन्तः मदजलस्राविणः हिमावलक्षच्छवयः हिमशुभ्रकान्तयश्च ये मातङ्गनगाः करिपर्वतास्तानधिरोहन्ति तेऽतएव

माधवनीमैन्द्रीं श्रियमतिक्रान्ताः अन्ये केचिद् गणा नरनारायणतुल्यतामुपेताः । नरनारायणावपि हिमपर्वतस्थौ इन्द्रशोभातिशायिनौ चाऽतस्तयोः सदृशाः सन्तो विरेजुः ॥ २५ ॥

अथ यावदिमे महाप्रयोगैः
पुरतश्चोपचरन्ति तावदेषा ।
सहसा विलयं जगाम मायाऽ-
नयसम्पादितभूतिवत् प्रभूता ॥ २६ ॥

अथ यावत् इमे गणाः महाप्रयोगैः शस्त्राणामुपयुक्तप्रयोगैः पुरतः उपचरन्ति चिकित्सन्ते तावदेषा दानवीया मायाऽनयसम्पादितभूतिवत् अन्यायोपार्जितसम्पदिव सहसा झटिति विलयमन्तर्धानं नाशं वा जगाम । उपमा ॥ २६ ॥

किमपीह ततः प्रकल्पनीयम्
गणसेनाऽपि कुतोऽप्यलोकमाना ।
युगपद्विरतिं व्यशिश्रियत्सा
प्रणिवृत्ता कविलेखनीव रम्या ॥ २७ ॥

सा गणसेनाऽपि कुतोऽपि किमपि प्रकल्पनीयं आयोधनीयं प्रबन्धनीयं वा वस्तु अलोकमानाऽपश्यन्ती रम्या कविलेखनीव प्रणिवृत्ता प्रतिनिवृत्ता सती युगपत् एककालं विरतिं प्रशमं अन्तर्धानमिति यावत् । व्यशिश्रियत् प्रापत् । श्रयतेर्लुङि चङ् ॥२७॥

विगतोभयनायका समन्तात्-
परिशून्या रणमेदिनी न रेजे ।
क्षणमेव सुपांशुलेव नारी
कमनीयावयवीयवैभवेन ॥ २८ ॥

विगता उभयनायका उभयपक्षीया योद्धारो यस्याः सा पक्षे विगतावुभयनायकौ जारभर्तारौ यस्याः सा । अतएव समन्तात्परिशून्या रिक्ता उन्मना वा रणमेदिनी रणभूमिः कमनीयावयवीयवैभवेन सुपांशुला पुंश्चली नारीव क्षणमेव न रेजे । एवकारात्पुनर्नायकान्तरासादनं गम्यते ॥ २८ ॥

असकावयशस्करीव विद्या
युवतिश्चारुदती विभर्तृकेव ।
अपराक्रमिणः क्षमेव लक्ष्मी-
रिव दुर्वृत्तिमतोऽपुषन्न शोभाम् ॥ २९ ॥

असकौ विगतोभयनायका कमनीया रणभूमिरित्यर्थः । अयशस्करी विद्येव, विभर्तृका विधवा चारुदती सुदती युवतिः तरुणीव, अपराक्रमिणः क्षमेवं, दुर्वृत्तिमतोऽविनीतस्य पुरुषस्य लक्ष्मीरिव शोभा नाऽपुषत् । द्युतादित्वादङ् । मालोपमा ॥ २९ ॥

अथ तस्य निरस्तकैतवस्यो-
न्मुखवृत्तेः शकटाग्नियन्त्रलक्ष्या ।
सहसाऽऽविरभूदभिन्नवेगा
महती धूमघटा मुखावटेन ॥ ३० ॥

अथैवं निरस्तकैतवस्य निरस्तमायाप्रपञ्चस्य तस्य सहस्रकवचस्य उन्मुखवृत्तेरूर्ध्वीकृतमुखवृत्तेः सतः मुखावटेन मुखगर्तमार्गेण करणेन सहसाऽवितर्किता शकटस्याऽग्नियन्त्रे इव लक्ष्याऽनुमेयाऽभिन्नवेगाऽविरतोद्गारा महती धूमघटाऽऽविरासीत् प्रादुर्भूता ॥ ३० ॥

इयमाशु नभोऽधिगम्य तुङ्गम्
जलवाहावलिभावमभ्युपेता ।

भयमावहति स्म पुष्करौघैः
खरनिर्ह्रादितवैद्युताग्नितापैः ॥ ३१ ॥

इयं तन्मुखनिःसृता धूमघटा तुङ्गमुन्नतमाकाशमधिगम्याऽऽरुह्य जलवाहावलिभावं मेघपङ्क्तितां अभ्युपेता प्राप्ता सती पुष्करौघैः जलवृष्टिप्रवाहैः तथा खरनिर्ह्रादितैस्तीक्ष्णगर्ज्जितैः वैद्युताग्नितापैश्च करणैर्भयमावहति स्म । अत्र—नीचाः खलून्नतं पदमवाप्याऽऽढ्यतराः सन्तो दुराचारैर्लोकभयावहा भवन्तीत्यलङ्कारध्वनिः ॥ ३१ ॥

लघुना तदनेकसन्निपातः
प्रचुरोपप्लवदर्शनोऽगदेन ।
जवनेन मुनेर्महामहिम्ना
मुखनिःश्वासनभस्वता विलिल्ये ॥ ३२ ॥

दृश्यतेऽनेन दर्शनः । कर्तरि ल्युट् । प्रचुराणां उपप्लवानां वज्राग्निपातादीनां कम्पप्रलापादीनां वा दर्शनः । स चाऽसौ अनेकेषां धूमजलादीनां कफपित्तादिदोषाणां वा सन्निपातः संघट्टो मंथस्तदाख्यो रोगविशेषो वा लघुनाऽल्पमात्रकेण किञ्च महामहिम्नाऽतएव जवनेन क्षिप्रसञ्चारिणा मुनेर्नारायणस्य मुखनिःश्वासनभस्वता मुखनिःश्वासवायुना हेतुना विलिल्ये विलयं प्राप्तः । कथंभूतेन अगदेन निरामयेन औषधरूपेण च । यथा महौषधविशेषेण सन्निपातो विलीयते तद्वदित्यलङ्कारध्वनिः ॥ ३२ ॥

अथ कोपहुताशनेन तस्य
ज्वलतो वह्निकणा निपेतुरङ्गात् ।
स दधार तदाऽग्निपुष्पझर्य्या
गुरुचित्रावहयोपमां प्रतापी ॥ ३३ ॥

अथ कोपहुताशनेन क्रोधाग्निना ज्वलतस्तस्य दानवस्याऽङ्गात् वह्निकणाः अग्निविस्फुलिङ्गा निपेतुः । तदा स प्रतापी दानवः गुरुचित्रावहया महाश्चर्यप्रदयाऽग्निपुष्पझर्या 'फूलझरी' इति लोके प्रसिद्धया शलाकया उपमां दधार । 'सहयुक्तेऽप्रधाने' इति तृतीया ॥ ३३ ॥

सहसा हिमशैलकाननानि
विलिहानो ज्वलनः समिद्धजिह्वः ।
जलयन्त्रदृशाऽम्बुबिन्दुवर्षै-
र्हरिणाऽहारि रयेण सानुभाजा ॥ ३४ ॥

सहसा समिद्धजिह्वः प्रदीप्तार्चिरतएव हिमशैलकाननानि विलिहानो दहन् ज्वलनस्तदङ्गस्फुलिङ्गोत्थः । कर्मणि प्रथमा । सानुभाजा पर्वतशिखरस्थेन जलयन्त्रदृशा जलझरयन्त्रसदृशेन हरिणा मुनिनाऽम्बुबिन्दुवर्षैः समन्ताज्जलकलप्रकरवृष्टिभिः करणैः रयेण वेगेनाऽहारि हृतः ॥ ३४ ॥

स उपायमपायविघ्नितोऽपि
रचयामास यमेव दानवेन्द्रः ।
मुनिदैवबलात्स एव शीघ्रम्
बत विध्वंसमनामयादयासीत् ॥ ३५ ॥

एवमपायविघ्नितोऽपि स दानवेन्द्रो यमेवोपायं विजयोद्योगं रचयामास स एवोपायः अनामयाद्दुर्निवारादित्यर्थः । मुनिरेव दैवबलं तस्मात्कारणात् शीघ्रं विध्वंसं विनाशमयासीत् प्राप्तवान् । बतेति खेदे ॥ ३५ ॥

प्रचुचूर्णयिषोर्हरेर्निदेशम्
कवचं तस्य दृगन्तसंज्ञयाऽऽप्य ।

**अथ सन्निहितं सुदर्शनास्त्रम्**
**प्रथमं प्राणमिव क्षयं निनाय ॥ ३६ ॥**

अथ तस्य दानवस्य कवचं प्रचुचूर्णयिषोश्चूर्णयितुमिच्छोः हरेर्निदेशं आज्ञां दृगन्तसंज्ञया नयनसंकेतेनाऽऽप्य लब्ध्वा सन्निहितं समीपस्थं सुदर्शनास्त्रं चक्रं कर्तृ । तस्य प्रथममादिमं कवचं प्रथमं प्राणमुत्साहमिव क्षयं नाशं निनाय । सुदर्शनेनाऽऽप्यागमनसार्थक्यं सम्पादितमिति भावः ॥ ३६ ॥

**अभिषङ्गममर्षमीयिवान् स**
**विपुलं चित्रतनुत्रपुत्रनाशात् ।**
**अवलम्ब्य हृदाऽपरान् विवर्म्मा**
**सदृशान् तस्य तनूचकार सद्यः ॥ ३७ ॥**

चित्रतनुत्रपुत्रनाशात् हेतोः विपुलं महान्तं अभिषङ्गं शोकं अमर्षं कोपश्चेयिवान् प्राप्तवान् विवर्म्मा विशिष्टकवचः बहुकवचपुत्रः इति यावत् । स दानवः हृदा मनसा तस्य पूर्वोपहतस्य कवचपुत्रस्य सदृशान् तद्वद्दुर्भेदानित्यर्थः । अपरानन्यान् कवचपुत्रानवलम्ब्याऽऽश्रित्य सद्यः सपादि तनूचकार । अभिषङ्गं शिथिलयामासेत्यर्थः ॥ ३७ ॥

**महता समयेन सम्भृतं यद्**
**व्ययमेतस्य तपोधनञ्जगाम ।**
**बलिनस्तपसस्तनुत्रभङ्गात्**
**पुनरप्येष ततस्तपश्चचार ॥ ३८ ॥**

यद् यस्मात् महता समयेन सम्भृतं सञ्चितं एतस्य मुनेस्तपोधनं तपसस्तपस्विनो बलिनश्च दानवस्य तनुत्रभङ्गात् कवचभेदनाद्धेतोः व्ययं नाशं जगाम । ततस्तस्मात्कारणादेष मुनिः

पुनरपि तपश्चचार तदुपार्जितुं प्रवृत्त इत्यर्थः । अत्र कवचभङ्गो दानवस्य तपोविनाशश्च मुनेरिति कविप्रौढोक्तिसिद्धोऽसङ्गतिरलङ्कारः ॥ ३८ ॥

**अथ यावदसौ द्वितीयमस्त्रैः**
**परिणद्धो विधिनोदितोऽनभिज्ञः ।**
**प्रयुनक्ति नरेण तत्समेना-**
**ग्रजशिष्येण समुद्यतं हि तावत् ॥ ३९ ॥**

अथाऽनभिज्ञो नरनारायणरहस्यानभिज्ञस्तथात्वे च विधिनोदितो भाविप्रेरितः अभिज्ञानामपि विधिर्दुर्निवारोऽनभिज्ञानां तु किमुतेति भावः । अस्त्रैः परिणद्ध ऊर्जितोऽसौ दानवः यावत् द्वितीयं कवचं प्रयुनक्ति प्रबध्नाति । 'यावत्पुरानिपातयोर्लट् । ' तावत् तत्समेन नारायणादन्यूनेनेत्यर्थः । अग्रजस्य ज्येष्ठस्य भ्रातुः शिष्येण शासितुं योग्येन नरेण समुद्यतं युद्धायोद्युक्तम् । भावे क्तः ॥ ३९ ॥

**अवधीरितवानभीरुपायै-**
**र्विकृतीः सन्ततमायया निबद्धाः ।**
**अयमेकतमाननानिलेन**
**तदरेर्वर्म च भस्मसाच्चकार ॥ ४० ॥**

अभीर्निर्भीकः । अरेर्दानवस्य सन्ततमायया निबद्धा विकृतीः उपायैः पूर्वतुल्यैरवधीरितवान् पराभूतवान् अयं नरः तद्द्वितीयं च दानवीयं वर्म कवचं एक एव एकतमः स चाऽसावाननानिलो मुखनिःश्वासस्तेन करणेन भस्मसाच्चकार कात्स्न्येन भस्मीकृतवान् । अत्राऽनिलेन भस्मीकरणमिति विषमः ॥ ४० ॥

**इत्थं रिपुर्दशशतानि तनुच्छदानाम्**
**बिभ्रन्मणीनिव महाहिरपारयत्नः ।**

द्वेधा विभज्य हरिणा वपुरप्रमेयम्
पर्यायतो व्यघटि सत्तपसैकशेषः ॥ ४१ ॥

इत्थममुना प्रकारेण सत्तपसा हरिणा रिपुर्दानवः पर्यायतः एकस्तपस्यत्यपरो युध्यते इत्यनुक्रमेण एक एव कवचः शेषो यस्य स तथोक्तो व्यघटि कृतः । कर्मणि लुङ् । 'चिण्णमुलो-र्दीर्घोऽन्यतरस्याम्' इति वैकल्पिको दीर्घाभावः । किं कृत्वा अप्रमेयं वपुर्द्वेधा नरनारायणरूपेण विभज्य विभक्तं कृत्वा । किंभूतो रिपुः तनुच्छदानां कवचानां दशशतानि सहस्रं बिभ्रत् । क इव मणीन् बिभ्रत् महाहिर्महासर्प इव कीदृशः अपारयत्नस्त-द्रक्षणायाऽनेकयत्नः ॥ ४१ ॥

अथ स तमवशिष्टं दिव्यसाम्वत्सरीणम्
रणमखमपहाय श्वासमेकं दधानः ।
अधिरवि परिलिल्ये प्राणसन्त्राणहेतो-
र्हरिरपि निरतोऽभूत्पूर्ववद्ध्यानयोगे ॥ ४२ ॥

इति श्रीसदानन्दकृतौ नरनारायणीये काव्ये चतुर्थः सर्गः ॥४॥

अथैकावशेषणानन्तरं स दानवः प्राणसन्त्राणहेतोः बहून् संव-त्सरान् सम्भृतः इति साम्वत्सरीणः । खञ् । दिव्यश्चासौ साम्वत्सरीणश्च तं रणमखं रणयज्ञं अपहाय त्यक्त्वाऽवशिष्टं तमेकं कवचं एकमन्तिमं श्वासमिव दधानः आददानः । एकश्वासपरो वेगश्च ध्वन्यते । रवौ इति अधिरवि । विभक्त्यर्थेऽव्ययीभावः । परिलिल्ये परिलीनः । हरिर्नरनारायणात्मकोऽपि पूर्ववत् ध्यान-योगे निरतस्तत्परोऽभूत् । मालिनीवृत्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ४२ ॥

इति श्रीसदानन्दसूनुवाणीविलासकृतायां दिग्दर्शिनीसमाख्यायां नरनारायणीयकाव्यव्याख्यायां चतुर्थः सर्गः ॥ ४ ॥

---

# पञ्चमः सर्गः ।

जातुविश्वरचनागुणचुञ्चो-
रात्मजः स महतीकृतहस्तः ।
नारदोऽथ मघवन्तमभीयेऽ-
धिष्ठितं सुरगणेन सुधर्म्माम् ॥ १ ॥

अथ तयोस्तपोवस्थानानन्तरं जातु कदाचित् विश्वरचनागुणै-र्वित्तः । 'तेन वित्तश्चुञ्चुप्चणपौ' इति चुञ्चुप्प्रत्ययः । तस्य ब्रह्मणः आत्मजः पुत्रः । यथा पिता तथा पुत्रः प्रपञ्चपरः इति भावः । महती तदाख्या वीणा तस्यां कृतहस्तः सम्यगभ्यस्तः धृतहस्तो वा स प्रसिद्धो नारदः सुरगणेन सह सुधर्म्मा नाम सभां अधिष्ठितं तत्रावस्थितम् । 'अधिशीङ्–' इत्यधिकरणे कर्मत्वम् । मघवन्तामिन्द्रम् अभीये प्रतिजगाम । ईङ् गतौ दैवादिकः । अस्मिन् सर्गे स्वागतावृत्तम्–'स्वागतेति रनभाद्गुरुयुग्मम्' इति लक्षणात् ॥ १ ॥

अर्घविष्टरपुरःसरमर्घ्यम्
शक्रतः समुपलभ्य मुनीन्द्रः ।
वाङ्मयीमिति पुरो विरचय्यो-
पाहरद्रुचिकरीमुरुमालाम् ॥ २ ॥

मुनीन्द्रो नारदः शक्रतः इन्द्रात् सकाशात् अर्घविष्टरपुरस्सरं पाद्यार्घासनपूर्वकं अर्घ्यं पूजाविधिं समुपलभ्य गृहीत्वा इति वक्ष्यमाणप्रकारां वाङ्मयीं उरुमालां महतीं स्रजं पुरोऽग्रतो विरचय्य गुम्फयित्वा उपाहरत् उपहारीकृतवान् । अत्र पूजा गृहीता माला दत्ता इति तुल्यवस्तुविनिमयरूपो विनिमयालङ्कारभेदः ॥ २ ॥

नीरसाङ्गलतमिद्धविकाशम्
तप्यमानमभितोऽभृततापम् ।
चित्रमैक्षि भुवनेऽभयपात्रम्
धीर धर्मतनयद्वयमात्रम् ॥ ३ ॥

हे धीर ! भुवने जगति भ्रमता मयेति शेषः । नीरसा शुष्का अङ्गलता गात्रलता यस्य तत्तथाविधमपि इद्धविकाशं प्रवृद्धविकाशं तप्यमानं तपः कुर्वदपि पक्षेऽग्न्यादितापनं च ध्वन्यते । 'तपस्तपः-कर्मकस्यैव' इति कर्तुः कर्मवत्त्वात् कर्मकर्तरि शानच् । तथापि अभृततापं अजातदुःखम् । अतप्तता च ध्वन्यते । तथाऽभयपात्रं तपस्विनामेकाकित्वे सत्यपि सुतरां निर्भीकमित्यर्थः । धर्मतनय-द्वयमात्रं नरनारायणद्वयमेव नान्यदित्यर्थः । चित्रमाश्चर्यभूतं वस्तु ऐक्षि विलोकितम् । विरोधाभासोऽलङ्कारः ॥ ३ ॥

शक्र ते शतमखार्जितकीर्तिम्
तौ हि दीर्घतपसौ प्रजिहीर्षू ।
सादितारिविभवावपि यत् तत्-
पूर्वतामिव तपोऽधिनयेते ॥ ४ ॥

हीति निश्चयेन । हे शक्र इन्द्र ! दीर्घतपसौ महातपसौ तौ नरनारायणौ ते तव शतमखार्जितकीर्तिं शतक्रतुत्वं त्वद्राज्य-मिति यावत् प्रजिहीर्षू जिघृक्षू स्तः । कथमेतन्निश्चीयते इत्याह— सादितेति । यत् यस्मात् तौ सादितो विनाशितोऽरिविभवः कवचोपचयरूपो याभ्यां तौ तथोक्तावपि सन्तौ तपः स एवकालः पूर्वः आरम्भकालो यस्य तत् तस्य भावस्तत्ताम् इव अधिनयेते प्रापयतः । उत्प्रेक्षा ॥ ४ ॥

अर्थसिद्धिमधिगम्य हि सर्वो
विश्रमी विगणयाऽऽत्मगतं तत् ।

तौ पुनः कृमिशतक्षतगात्रा-
बुद्धवं तपसि तं न जहीतः ॥ ५ ॥

प्रकारान्तरेण द्रढयति अर्थेति । हि यतः सर्वोऽपि जनः अर्थसिद्धिं कार्य्यसिद्धिं अधिगम्य प्राप्य विश्रमोऽस्याऽस्तीति विश्रमी विश्रामवान् भवेत् । तदेतत् तावत् त्वमेवाऽऽत्मगतं स्वगतं विगणय विचारय । तौ नरनारायणौ पुनः अर्थसिद्धिमधिगम्याऽपि कृमिशतक्षतगात्रौ वल्मीकलीढशरीरौ सन्तौ तपसि विषये तं प्रवृद्धमित्यर्थः । उद्धवं उत्सवं न जहीतः नैव त्यजतः । ओहाक् त्यागे । त्वदासनमाच्छिद्यैव विश्रामं करिष्यतः इति भावः ॥ ५ ॥

एकपादमुपभास्करमुच्चै-
रुत्थितौ नियतमुन्नतबाहू ।
त्वत्पुरीं ध्रुवमुपस्करकीर्णा-
मन्तराऽद्रिशिखरे व्यपहर्तुम् ॥ ६ ॥

नियतं निरन्तरं उपभास्करं सूर्य्यस्य समीपे उन्नतबाहू ऊर्ध्वबाहू सन्तौ एकपादं एकचरणावलम्बमुच्चैरौन्नत्येन उत्थितौ नरनारायणौ ध्रुवमुत्प्रेक्ष्यते । अन्तरा तपःसिद्धेः प्रागेवेत्यर्थः । उपस्करकीर्णाम् विश्रामसामग्रीसम्पन्नां त्वत्पुरीममरावतीं अद्रिशिखरे हिमवच्छृङ्गोपरि व्यपहर्तुं आकर्षितुं व्यवसिताविति शेषः ॥ ६ ॥

यत्त्वया न विदितावियता तौ
कालतस्तदसि सुप्तिमितस्त्वम् ।
सौरतारवसुखैः सुरराजा-
स्वप्नशब्दमपि धारयमाणः ॥ ७ ॥

इयता महतेत्यर्थः । कालतः समयेन सार्वविभक्तिकस्तसिः । तौ तपस्यन्तौ नरनारायणौ त्वया न विदितौ न ज्ञातौ यत् । तत्तस्मात् हे सुरराज इन्द्र ! त्वमस्वप्नशब्दं धारयमाणोऽपि सुरतरुभ्यः कल्पवृक्षेभ्य आगतानि सौरतारवानि । अनुशतिकादित्वादुभयपदवृद्धिः । तथाविधानि यानि सुखानि तैः कारणैः सुतरां सुप्तिमितोऽसि निद्रितोऽसि वृथैवेयमस्वप्नतेति भावः ॥ ७ ॥

**हन्त दृष्टिविषयं न गतौ ते**
**सत्यमेव तपसौ नयनानाम् ।**
**बिभ्रतोऽपि महतां च शतानि**
**तेजसा त्रिभुवनं लभमानौ ॥ ८ ॥**

हन्तेति खेदे । तेजसा तपोमहिम्ना त्रिभुवनं त्रिलोकीं लभमानौ व्याप्नुवानौ तपसौ नरनारायणौ । महतां नयनानां शतानि सहस्रं बिभ्रतो धारयतोऽपि ते तव दृष्टिविषयं दृष्टिगोचरं सत्यमेव न गतौ किमिति काकुः ॥ ८ ॥

**किं तिमिङ्गिलभुजङ्गवराहै-**
**र्भीषणे मणिनिधौ विनिमज्ज्य ।**
**रत्नराशिमपहाय नदीष्णः**
**शुक्तये प्रयतते धृतिशाली ॥ ९ ॥**

नदीष्णो जलमज्जनकर्मनिष्णातः पुरुषः तिमिङ्गिलो जलजन्तुविशेषः भुजङ्गः सर्पः वराहो नक्रस्तैः भीषणे भयङ्करे मणिनिधौ रत्नाकरे समुद्रे विनिमज्ज्य रत्नराशिं रत्नपुञ्जमपहाय त्यक्त्वा शुक्तये शुक्तिमादातुं । तुमर्थचतुर्थीयम् । प्रयतते यत्नं करोति किं नेत्यर्थः। अपि तु रत्नेभ्य एव यत्नवान् भवति । तावप्युग्रं तपस्तप्त्वा त्वदासनं ग्रहीष्यतः इति भावः। अप्रस्तुतप्रशंसालङ्कारः ॥९॥

एषणाविषयतामुपयातो
हीयते किमपि मे न मरुत्वन् ।
प्रायशस्त्वदनुवृत्तिनिमित्ता
विष्टपभ्रमणचञ्चुरतेऽयम् ॥ १० ॥

हे मरुत्वन्निद्र ! एषणानां दारपुत्रवित्तैषणानां अविषयतां उपयातः प्राप्नुवानस्य । यातेः शतृ । मे मम नारदस्य किमपि वस्तु न हीयते तयोस्तपोमहिम्ना हानिं न प्राप्नोति । अकिञ्चनत्वादिति भावः । किमर्थं पुनर्भुवनभ्रमणप्रयास इत्याशङ्क्याऽऽह प्रायश इति । इयं मदीया विष्टपभ्रमणचञ्चुरता भुवनभ्रमणप्रयासः प्रायशो बाहुल्येन त्वदनुवृत्तिनिमित्ता त्वत्सेवार्था हि । निःस्वार्था राजभक्तिरस्मादृशैः कर्तव्येति भावः । क्वचिदिन्द्रस्याऽस्याहितं तु न इति भुवनेषु समीक्ष्यतेऽस्माभिरिति फलितम् ॥१०॥

एवं चेत्तर्हि कः प्रतिविधिरित्याह-

रम्यतां वहति यो द्रढिमानम्
नो जहाति च विधिः स विधेयः ।
कर्तुरेव हृदयं न दुनोति
नाऽन्यथा स विहितो ननु तावत् ॥ ११ ॥

यो विधिर्विधानं रम्यतां परिणामरम्यतां मनोहरतां वा वहति धारयेत् तथा द्रढिमानं दृढत्वं च न जहाति त्यजति स विधिस्त्वया विधेयः कर्त्तव्यः । वज्रादिप्रहारो न करणीय इति भावः । अन्यथा उक्तवैपरीत्येन विहितः कृतः स विधिः तावत् प्रथमं कर्तुरेव हृदयं मनः न दुनोति दुःखयाति इति न । अपि तु दुनोत्येवेत्यर्थः ॥११॥

शात्रवान्धतमसौघमपघ्नन्
चन्द्रकान्तकमनीयकलाभिः ।

दिव्यमभ्युदयमाप्नुहि धीम-
न्नात्मनोऽम्बरचरव्रजराज ॥ १२ ॥

आशीर्व्याजेन कर्तव्यमुपादिशति । हे अम्बरचरव्रजराज ! हे चन्द्रकान्त ! हे धीमन् ! कमनीया याः कलाः शृङ्गारसम्बन्धिन्यः षोडशकला वा ताभिः शात्रवमेवान्धतमसं गाढध्वान्तं तस्य ओघं पुञ्जमपघ्नन् अपसारयन् तौ मोहयन्नित्यर्थः । आत्मनो दिव्यमभ्युदयमाप्नुहि लभस्व निदर्शनालङ्कारः ॥ १२ ॥

प्रत्युदीर्य्य कुसुमानि पदानि
चारुचित्रचरितानुफलानि ।
अद्भुतोऽन्तरदधात्तरुरेष
तस्य सार्द्धमलसैः किल भावैः ॥ १३ ॥

चारुचित्रं च यच्चरितं भाविवृत्तं तदेवाऽनुफलं अनुगतं फलं येषु तानि तथोक्तानि पदानि सुप्तिङादीनि तान्येव कुसुमानि पुष्पाणि प्रत्युदीर्य्य विकाश्य एष नारदरूपोऽद्भुतस्तरुः तस्य इन्द्रस्याऽलसैर्मन्दैः भावैरभिप्रायैः सहाऽन्तरदधात् अन्तर्हितोऽभूत् । नारदान्तर्धानसमकालमेवेन्द्रस्य मानसो भावो विपरिवर्तित इत्यर्थः । सहोक्तिः ॥ १३ ॥

ऊरुसौष्ठवनिराकृतरम्भा-
चैत्रचित्ररथमन्मथवीरान् ।
सन्निपात्य विनिपातमनिष्टं
तादृशं सुरपतिः प्रचचक्षे ॥ १४ ॥

सुरपतिरिन्द्रः ऊर्वोर्जङ्घयोः सौष्ठवेन सुष्ठुतया निराकृता न्यक्कृता रम्भा कदली याभिस्ताः एवंविधा रम्भादयोऽप्सरसः । चैत्रो वसन्तः । चित्ररथस्तदाख्यो गन्धर्वराजश्च । मन्मथः कामदेवश्च त एव वीरास्तान् सन्निपात्य युगपदाहूय तादृशं नारदोक्तं नरना-

रायणतपसा भविष्यन्तामित्यर्थः । अनिष्टं अदैवहेतुत्वादिति भावः । विनिपातं पराभवं प्रचचक्षे कथयामास ॥ १४ ॥

तत्र सा त्रिदशराजवधूना-
मग्रणीः किल कलाकुशलानाम् ।
प्रत्यपद्यत वचः प्रतिवक्तुम्
शल्यतूलनपटु प्रणियोक्तुः ॥ १५ ॥

तत्रेन्द्राग्रे कलाकुशलानां त्रिदशराजवधूनां अप्सरसां अग्रणीरग्रगण्या सा रम्भा प्रणियोक्तुः स्वामिन इन्द्रस्य शल्यतूलनपटु विषादशङ्कुनिष्कर्षणक्षमं । तूल निष्कर्षे । वचः वचनं प्रतिवक्तुं प्रत्यपद्यत स्वीचकार ॥ १५ ॥

स्त्रीति माऽवजगणः प्रणतोऽयम्
वक्ति वल्लभजनो भजनोत्कः ।
साधये न यदि ते परमर्थम्
वञ्चिताऽऽर्यपरिरम्भसुखेन ॥ १६ ॥

हे नाथ ! मां स्त्री इति माऽवजगणः माऽवज्ञासीः । भजनोत्कः स्वामिसेवोत्सुकोऽयं ते वल्लभजनः । आत्मानिर्देशोऽयम् । प्रणतः सन् वक्ति पणमारोप्य कथयति । वचनप्रकारमाह—साधये इत्यादिना । यदि ते परं उत्कृष्टं अर्थं नरनारायणलोभनरूपं प्रयोजनं न साधये तर्हि आर्यस्य तव परिरम्भसुखेनाऽऽलिङ्गनानन्देन कर्त्रा वञ्चिता विरहिता स्याम् ॥ १६ ॥

किं तया वनितया तनयेन
किन्नु तेन सचिवेन जनेन ।
अर्थिना बहुतृणेन विपत्तौ
स्वामिनाऽविदितसत्त्वगुणेन ॥ १७ ॥

तया स्वार्थिन्या किञ्च विपत्तौ स्वामिनाऽविदितसत्त्वगुणयाऽत-एव बहुतृणेन तृणकल्पया च वनितया स्त्रिया किं प्रयोजनम् । न किमपीत्यर्थः । तथा अर्थिना स्वार्थसाधनपटुना किञ्च विपत्तौ विपत्तिकाले स्वामिना पालयित्राऽविदितः सत्त्वगुणः सत्तागुणो यस्य तेन तथाविधेन जनेन प्रजाजनेनाऽपि किम् । तथा तेन उक्तार्थविशिष्टेन सचिवेन मन्त्रिणा च किम् ॥ १७ ॥

**वल्लभं मृगयुसायकलक्ष्यम्**
**कायतो हि हरिणी व्यवधाय ।**
**उत्सहेत परिरक्षितुमिष्टम्**
**वेदनां किमपि नो गणयन्ती ॥ १८ ॥**

हरिणी मृगी तदाख्या सुराङ्गना च विवक्ष्यते । मृगयुर्मृगो-पजीवी तस्य सायकस्य बाणस्य लक्ष्यं लक्ष्यभूतमिष्टं सुरतादि-कालेऽभीष्टं वल्लभं मृगं कायतः स्वशरीरेण व्यवधायाऽऽच्छाद्य वेदनां सायकव्यथां न किमपि ईषदपि गणयन्ती । किम-पीति क्रियाविशेषणम् । परिरक्षितुं त्रातुं उत्सहेत उत्साहवती भवेत् ॥ १८ ॥

**को नु तत्त्रिजगतीतलवर्ती**
**यस्त्वदङ्घ्रियुगयोरनुवर्ती ।**
**शक्यते झटिति नैव विधातुम्**
**संहितेषुधनुषा विषमेषोः ॥ १९ ॥**

त्रिजगतीतलवर्ती त्रिभुवनान्तरालस्थः को न्वसौ पुरुषः । न कोऽपीत्यर्थः । यः पुरुषः विषमेषोर्मन्मथस्य संहितेषुना संहित-बाणेन धनुषा कर्त्रा झटिति त्वदङ्घ्रियुगयोस्तच्चरणयुग्मयोरनुवर्ती सेवको विधातुं कर्तुं नैव शक्यते । सर्व एव विमोह्यन्तेऽनेनेति भावः ॥ १९ ॥

केवलेन मधुना मुनिचेतः
क्षम्यते विदलितुं ललिताभैः ।
सार्द्धमासुरभिगन्धिभिरेव
किम्पुनः स्मरसखीसचिवेन ॥ २० ॥

केवलेनैकाकिना मधुना वसन्तेनैव ललिताभैः शुभदर्शनैः आसमन्तात्सुरभिगन्धिभिरतिसौरभैः आम्रवृक्षैः सार्द्धमेव मुनिचेतो विदलितुं विभेत्तुं क्षम्यते शक्यते । स्मरः कामः सख्योऽप्सरसश्च ता एव सचिवाः सहचर्य्यो यस्य तेन तथोक्तेन सता किं पुनः । किमु वक्तव्यमित्यर्थः । सहोक्तिः ॥ २० ॥

जृम्भमाणविभवे मधुराजे
शीर्णपर्णविरसोऽपि पलाशी ।
वल्लितन्तुकरलम्भनहेतो-
र्हस्तमानमयते सुविकाशी ॥ २१ ॥

मधुराजे वसन्तराजे जृम्भमाणविभवे विवर्द्धमानविभूतौ सति शीर्णपर्णः शिशिरे भ्रष्टपत्रोऽतएव विरसः शुष्क इव प्रतीयमानोऽपि पलाशी वृक्षः सुविकाशी वसन्तेन नवकिसलयपुष्पसम्पन्नः सन् वल्लिर्लता नायिका च तस्याः तन्तुकरलम्भनहेतोस्तन्तुहस्तावलम्बनाय हस्तं विटपहस्तमानमयते । वसन्ते जडोऽपि माद्यति किमुत चेतन इति भावः । समासोक्तिः ॥ २१ ॥

चित्राचित्ररथवर्तितरागै-
र्लेख्यमूर्तिरभिवर्तितवक्त्रा ।
दीपको ज्वलति शून्यदशोऽपि
स्यन्दतेऽम्बरमवार्धरमाशु ॥ २२ ॥

चित्रा आश्चर्यावहाः ये चित्ररथवर्तितास्तदाख्यगंधर्वप्रकारिताः रागाः भैरवादयस्तैः लेख्यमूर्तिश्चित्रविन्यस्ता मूर्तिरपि अभिवर्तितं रागश्रवणायाऽभिमुखीकृतं वक्रं मुखं यया सा तथोक्ता भवति । जनता तु किमुतेति भावः । शून्यदशो वर्तिकारहितः कामदशाशून्यश्च दीपकोऽपि ज्वलति दीपकरागेणेत्यनुमेयम् । अवार्धरं निर्मेघं अम्बरमाकाशं गुह्याच्छादनवस्त्रं च स्यन्दते द्रवति । मेघरागेणेत्यनुमेयम् ॥ २२ ॥

किं मनस्विभिरसाध्यमुपायै-
देशकालनिगमप्रकृतिस्थैः ।
वीतविघ्नमिति मुख्यमहीनम्
लप्स्यसे स्फुटनिदर्शनमस्मान् ॥ २३ ॥

देशकालनिगमप्रकृतिस्थैर्देशकालाद्यनुसारिभिर्मनस्विभिः धीरैः पुरुषैः उपायैः करणैः वीतविघ्नं निर्विघ्नं किमसाध्यम् । न किमपीत्यर्थः । इत्यस्मिन् विषयेऽस्मान् अहीनं मुख्यं स्फुटनिदर्शनं प्रत्यक्षोदाहरणं लप्स्यसे प्राप्स्यसि ॥ २३ ॥

तावयस्मयमनःस्मयभाजौ
दूरतः समवकृष्य बलारे ।
लोहकान्तमणितामुपयातान्
पश्य नस्त्यज शुचं भज मोदम् ॥ २४ ॥

अयस्मयं लोहमयं यन्मनो हृदयं । अयस्मयादित्वाद्भत्वम् । तेन हेतुना यः स्मयो मदस्तं भजतः इति तथोक्तौ तौ नरनारायणौ दूरतः समवकृष्याऽऽकृष्य मोहयित्वेति यावत् । लोहकान्तमणितामयस्कान्तमणिसादृश्यम् उपयातान् नोऽस्मान् युवतिजनान् पश्य । हे बलारे इन्द्र ! शुचं त्यज मुञ्च मोदं हर्षं च भज । उपमा ॥२४

साधयाम तदलं नु विलम्बै-
रानयाम मुनिपोतशुकौ तौ ।
स्वप्रपञ्चमयपञ्जरमध्ये
सन्निधाय मृगयाविधिविज्ञाः ॥ २५ ॥

तत्तस्मात्साधयाम कार्य्यसिद्धिं करवाम । प्रार्थनायां लोट् । नु इति वितर्के । विलम्बैः वृथाकालक्षेपैरलम् । मृगयाविधिर्मुनीनां आखेटकक्रिया तत्र विषये विज्ञा निपुणा वयं तौ नरनारायणाख्यौ मुनिपोतशुकौ मुनिबालशुकौ स्वप्रपञ्चमयपञ्जरमध्ये सन्निधायाऽऽनयाम त्वद्विनोदायेति भावः । लोट् । रूपकम् ॥२५॥

सन्निधिं स समयो नयनीयो
यत्र वा वयमनुष्ठितकृत्याः ।
सुप्रसन्ननयनेन विलोक्या
राजतुष्टिरयशस्यफलं न ॥ २६ ॥

यत्र यस्मिन्समये वा अनुष्ठितकृत्याः साधितकृत्याः वयं सर्वे राज्ञा सुप्रसन्ननयनेन सता विलोक्याः स समयः सन्निधिं सामीप्यं नयनीयः प्रापणीयः । शीघ्रं राजकार्य्यं साधयितव्यमित्यर्थः । राजतुष्टिः राजप्रसादः यशसि साधु यशस्यं तन्न भवतीति अयशस्यं यत्कार्य्यं तस्य फलं न । यशस्यैः कर्मभिरेव राजप्रसादो लभ्यते इत्यर्थः ॥ २६ ॥

इत्युदारवचनच्छलरम्भा-
वक्त्रचन्द्रगलितामृतपूरम् ।
सोऽनुभूय मदितो गणशस्तत्-
सिद्धयेऽनु विदधावनुशिष्टिम् ॥ २७ ॥

इतीत्थं उदारवचनच्छलेन उदारवाग्व्याजेन रम्भाया वक्त्रचन्द्राद् विगलितं अमृतपूरं सुधाप्रवाहं अनुभूय निपीय मदोऽस्य

सञ्जातः इति मदितो हर्षितः स इन्द्रः तत्सिद्धये कार्य्यसिद्धये गणशः प्रत्येकं गणान् प्रति अनुशिष्टिमाज्ञाम् विदधौ कृतवान् ॥२७॥

तन्निदेशसमकालमहो स-
न्नाहमाहतिनिमित्तमितीमे ।
आरभन्त रभसेन सुधीरा
मन्द्रमङ्गलनिनादमृदङ्गम् ॥ २८ ॥

सुधीरा इमे गन्धर्वाप्सरसां गणाः तन्निदेशसमकालमिन्द्रानुज्ञासमकालमेवेति वक्ष्यमाणप्रकारं आहतिनिमित्तं मुनिविलोभननिमित्तमित्यर्थः । सन्नाहं भूषणादिसज्जनां मन्द्रो गम्भीरो मङ्गलनिनादः सुस्वनो मृदङ्गो यस्मिन्कर्मणि तद्यथा स्यात्तथा रभसेन हर्षेणाऽऽरभन्त ॥ २८ ॥

स्निग्धसिद्धनयनाञ्जनयोगात्
तत्कटाक्षविशिखा भृशमूहुः ।
तेजनामभिकवद्बलकर्तु-
र्भेषजस्य विधिनाऽभ्युपयोगैः ॥ २९ ॥

तासामप्सरसां कटाक्षविशिखाः कटाक्षबाणाः स्निग्धं सिद्धं च यन्नयनाञ्जनं तस्य योगात् हेतोः बलकर्तुः पौष्टिकस्य वृष्यस्य च भेषजस्य विधिनाऽभ्युपयोगैः अभिकवत् कामुकतुल्यं भृशमत्यन्तं तेजनां तीक्ष्णतामूहुः धारितवन्तः ॥ २९ ॥

यत्कलङ्कपदरूपकमुक्तम्
कज्जलं तदिह सूज्ज्वलरूपम् ।
कर्णगामिसुभगेक्षणपाताद्
दुर्भगोऽपि सुभगं हि लभेत ॥ ३० ॥

यत्कज्जलं अञ्जनं कलङ्कपदरूपकं । कुलकज्जलम् इत्यादौ कलङ्कपदवाचकमुक्तं कथितम् । तत्कज्जलं इहाऽप्सरस्सु कर्णगामिनि कर्णान्तविश्रान्ते सुभगे चेक्षणे नयने पातात् संयोगात् कारणात् सूज्ज्वलरूपं शृङ्गारपदवाच्यमित्यर्थः । जातमिति शेषः । हि यतः दुर्भगो दुर्गतोऽपि पुरुषः कर्णगामी विश्रुतः सुभगश्च यः पुरुषविशेषस्तस्य ईक्षणे दृष्टौ पातान्निपतनात् सुभगं सौभाग्यं लभेत प्राप्नुयात् । 'भगं श्रीकाममाहात्म्यवीर्य्ययत्नार्ककीर्तिषु ।' इत्यमरः । श्लेषानुप्राणितोऽर्थान्तरन्यासः ॥ ३० ॥

तुङ्गपीवरपयोधरबिम्बे
चारुचित्ररचना रचिता या ।
प्रौढहारिहरिचन्दनपङ्कैः
साऽभ्यपद्यत तनुच्छदशोभाम् ॥ ३१ ॥

प्रौढानामपि हारीणि मनोहराणि यानि हरिचन्दनपङ्कानि तैः तुङ्गं पीवरं च यत्पयोधरबिम्बं स्तनमण्डलं तस्मिन् या चारुश्चित्रा च रचना रचिता सा रचना तनुच्छदशोभां कवचश्रियमभ्यपद्यत प्राप्ता ॥ ३१ ॥

प्रान्तसङ्ग्रथितमौक्तिकमालम्
सन्निबन्धितशिरोरुहजालम् ।
जालमेव रुरुचे रमणीनाम्
योगिनेत्रशफराहरणाय ॥ ३२ ॥

रमणीनामप्सरसां प्रान्तेषु प्रान्तभागेषु संग्रथिता गुम्फिता मौक्तिकमाला यस्यैवंविधं सन्निबन्धितं यच्छिरोरुहजालं केशकलापस्तदेव योगिनेत्रशफराहरणाय मुनिनयनमीनाकर्षणाय जालम् आनायो रुरुचे शुशुभे ॥ ३२ ॥

सुप्रसाधितमनुत्तमदेव-
च्छन्दगुच्छमुखहारलताभिः ।
तारकाभिरिव कुन्ददतीनाम्
निर्मलं हृदयमम्बरमासीत् ॥ ३३ ॥

कुन्ददतीनां कुन्दपुष्पसदृशरदानाम् । अत्र संज्ञा विवक्षिता । 'स्त्रियां संज्ञायाम्' इति दत्रादेशः । निर्मलं हृदयं वक्षःस्थलं । अनुत्तमाः या देवच्छन्दगुच्छमुखाः देवच्छन्दगुच्छादिभेदविशिष्टाः हारलतास्ताभिः अम्बरमाकाशं तारकाभिरिव सुप्रसाधितं सुमण्डितमासीत् । उपमा ॥ ३३ ॥

तत्सुवृत्तकुचमण्डललाभाद्
बाढमेव शुशुभे मणिहारैः ।
ऊर्जितं समुचितं पदमुच्चै-
रेत्य सद्गुणवतां नियता श्रीः ॥ ३४ ॥

मणिहारैः कर्तृभिः । तासामप्सरसां सुवृत्तं सुजातं यत्कुचमण्डलं तस्य लाभाद् बाढमेव शुशुभे । तथा हि ऊर्जितं सुसम्पन्नं समुचितं योग्यं च पदं स्थानं एत्य लब्ध्वा सद्गुणवतां सद्गुणशालिनां उच्चैरुन्नता श्रीः शोभा नियता निश्चितैव । अर्थान्तरन्यासः ॥ ३४ ॥

पादपद्ममिलिताश्रयभाञ्जि
नूपुराणि रुचिराणि वधूनाम् ।
पत्तयोऽपि पटुसिञ्जितसाहं-
पूर्विकोक्तिमुदगारिषुरेव ॥ ३५ ॥

वधूनां पादपद्मयोश्चरणकमलयोः मिलितः प्राप्तः य आश्रयः शरणं तं भजन्ति तथाविधानि रुचिराणि नवीनानि नूपुराणि तान्येव पत्तयः पदातयः । पटुसिञ्जितं पटुरव एव साहम्पूर्विकोक्तिः अहमहमिकाप्रधानोक्तिस्ताम् उदगारिषुरुच्चारितवन्तः । रूपकम् ॥ ३५ ॥

सुभ्रुवां भ्रुवममंस्त शरासम्
मन्मथो भुजलतामथ पाशम् ।
तावलं मुनिचकोरगणाय
ध्येयचन्द्रनयनाय नितान्तम् ॥ ३६ ॥

मन्मथः कामः । सुभ्रुवां अप्सरसां भ्रुवं शरासं धनुः अथ पुनः तासां भुजलतां पाशं अमंस्त मेने । तावुभावेव धनुस्त्वेन पाशत्वेन च कल्पितवानित्यर्थः । तथा हि भ्रूधनुर्भुजपाशौ ध्येयं वस्तु तदेव चन्द्रस्तत्र नयनं अन्तर्दृष्टि लोचनं वा यस्य तस्मै मुनिचकोरगणायाऽलं पर्य्याप्तौ । 'नमःस्वस्ति-' इत्यादिना चतुर्थी ॥ ३६ ॥

दीप्तिमन्ति सुषमानि विमाना-
न्यग्रियाण्यलमकारिषताऽन्यैः ।
सोपबर्हशयनीयगृहाणि
चामरव्यजनदर्पणवन्ति ॥ ३७ ॥

अन्यैः सेवकैरित्यर्थः । दीप्तिमन्ति सुषमानि सुशोभानि अग्रियाणि श्रेष्ठानि च विमानानि सोपबर्हाणि शय्यादिपरिच्छदसहितानि शयनीयगृहाणि शयनागाराणि येषु तानि तथा चामरव्यजनदर्पणवन्ति बालव्यजनतालवृन्तमुकुरसुसम्पन्नानि अलमकारिषताऽलंकृतानि ॥ ३७ ॥

सालङ्कृतीः सुकविता इव भावपूर्णाः
सानन्दनेत्रशतमप्सरसो निरीक्ष्य ।
हृद्या ह्युदात्तगुणनायकनायिकाभिः
सम्भावनां जयविधौ मघवान् बभूवे ॥३८॥

मघवानिन्द्रः । सालङ्कृतीरलङ्कारैः सम्पन्नाः । भावाः शृङ्गारादयो निर्वेदादयश्च तैः पूर्णाः उदात्तगुणाः ये नायकाः गन्धर्वाः प्रौढादिभेदविशिष्टा वा नायिका रम्भादयः प्रोषितभर्तृकादयश्च ताभिर्हृद्याः हृदयाकर्षिणीरप्सरसः सुकविता इव निरीक्ष्य समालोच्य जयविधौ मुनिपराभवरूपे परकाव्योत्कर्षाहरणे वा सम्भावनां योग्यतां बभूवे लेभे । भू प्राप्तावात्मनेपदम् । पूर्णोपमा ॥ ३८ ॥

**अथ विनयगुणोज्ज्वलाननाभाः**
**प्रणतिमुपेत्य पुरन्दराङ्घ्रिपद्मे ।**
**सुरवरवनिताः प्रतस्थिरे ताः**
**ध्वनितमनोहरडिण्डिमप्रणादैः ॥ ३९ ॥**

अथ सन्नाहानन्तरं ताः सुरवरवनिता अप्सरसः विनयगुणेनोज्ज्वलाऽऽननाभा मुखकान्तिर्यासां तास्तथोक्ताः सत्यः पुरन्दराङ्घ्रिपद्मे इन्द्रचरणकमले प्रणतिं प्रणाममुपेत्य ध्वनितमनोहरडिण्डिमप्रणादैः समं प्रतस्थिरे चलिताः । पुष्पिताग्रावृत्तम् ॥ ३९ ॥

**उपनिजनिजयानमायतीनाम्**
**प्रगुणनितम्बभरेण मन्थराणाम् ।**
**प्रियमवददिवाऽतिसङ्कुलं तत्**
**त्रिदिवतलं चलनूपुरारवेण ॥ ४० ॥**

प्रगुणनितम्बभरेण मन्थराणां मन्दगतीनां उपनिजनिजयानम् स्वस्वविमानानां समीपे आयतीनामागच्छन्तीनां अप्सरसां चलाश्चञ्चला ये नूपुराश्चरणाभरणानि तेषामारवेण सिञ्जितेनाऽतिसङ्कुलं प्रतिध्वनितमित्यर्थः । तत् त्रिदिवतलं स्वर्गतलं प्रियं प्रस्थानकालस्वस्त्ययनं अवददिवेत्युत्प्रेक्षा ॥ ४० ॥

**उपसुवर्णनगं स्फुरितत्विषोऽ-**
**मलविमानवरावलयो बभुः ।**

युगपदभ्युदितग्रहसन्निभाः
समवगाढमहाम्बरमण्डलाः ॥ ४१ ॥

इति श्रीसदानन्दकृतौ नरनारायणीये काव्ये पञ्चमः सर्गः ॥ ५ ॥

सुवर्णनगस्य सुमेरोः समीपे इत्युपसुवर्णनगं स्फुरितत्विषः विकसितकान्तयः। समवगाढं महाम्बरमण्डलं महाकाशायामो याभिस्ताः तथोक्ता अमलानां विमानवराणां आवलयः पङ्क्तयः युगपत् एककालं अभ्युदिता उदयं प्राप्ता ये ग्रहाः सूर्य्यचन्द्राद-यस्तत्सन्निभाः तत्तुल्याः बभुर्भान्ति स्म । उत्प्रेक्षोपमा ॥ ४१ ॥

इति श्रीसदानन्दसूनुवाणीविलासकृतायां दिग्दर्शिनीसमाख्यायां नरनारायणीयव्याख्यायां पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ।

अथ सुधांशुरिव स्वविशाखया
वियति चित्ररथः शुशुभे शुभे ।
प्रबलया वलयाञ्चितया तया
समरयामरयानमधिश्रितः ॥ १ ॥

अथ परिजनप्रस्थानानन्तरं चित्ररथो नाम गन्धर्वराजः शुभे निर्मले वियति आकाशे स्वविशाखया सुधांशुश्चन्द्र इव वलया-ञ्चितया कटकालङ्कृतया तया प्रसिद्धया प्रबलया रम्भया सह समोऽविषमो रयो वेगो यस्य तदेवंविधं यत् अमरयानं विमानं तदधिश्रितः शुशुभे । उत्प्रेक्षा । द्रुतविलम्बितं वृत्तम्–' द्रुतविल-म्बितमाह नभौ भरौ ' इति लक्षणात् ॥ १ ॥

शिर इवोद्धतरागतिरोहित-
स्तिमितकान्तिसमस्तगभस्तिभिः ।

रुचिरवप्रगदीपनभश्चरैः
ससुमनः सुमनःपृथिवीभृतः ॥ २ ॥

कीदृशं तद्विमानम् । सुमनोभिः पुष्पैः सहितं ससुमनः तथा उद्गत उत्थितश्चाऽसौ रागो वप्रस्वरागः तेन तिरोहिता आच्छादिता अतएव स्तिमिताः निश्चलाः कान्तयो यासां तास्तथाभूता गभस्तयः किरणाः येषां तैस्तथोक्तैः रुचिरवप्रगा रुचिरोर्ध्वप्राकारे शोभार्थं स्थापिताः ये दीपाः मणिप्रदीपास्त एव नभश्चराः ग्रहास्तैः सुमनःपृथिवीभृतः सुरपर्वतस्य सुमेरोः शिरः शृङ्गमिवोपलक्ष्यमाणम् ॥ २ ॥

विशदचामरचारुमणिच्छटा-
च्छुरितसीमसितातपवारणम् ।
उपगतं धरणीपतिमूर्धताम्
समतया मतयाऽऽवृतसौरभम् ॥ ३ ॥

पुनः कीदृशं विमानम् । विशदाः शुभ्राः ये चामरा वालव्यजनानि चारवो मणिच्छटाश्च ताभिश्छुरिताऽलंकृता सीमा प्रान्तभागो येषां तानि तथाविधानि सितातपवारणानि श्वेतच्छत्राणि यत्र तत् आवृतसौरभं मनोज्ञतापरीतमतएव मतया सर्वसम्मतया समतया तुल्यतया धरणीपतिमूर्धतां राजशेखरतामुपगतम् ॥ ३ ॥

विकसितान् परितः स्तवकान् भ्रमद्-
भ्रमरकुञ्जरकुञ्जविभूषितम् ।
तदुदरादुदितैश्च मनोरमै-
रविकलैर्विकलैर्विनिनादितम् ॥ ४ ॥

पुनः कीदृशं विमानम् । विकसितान् स्तवकान् पुष्पगुच्छान् परितः समन्ताद् भ्रमन्तो भ्रमराः यत्रैवंविधा ये कुञ्जरकुञ्जाः कुञ्जान्तरमिलिताः निकुञ्जास्तैर्विभूषितम् । तथा तदुदरात्कुञ्जमध्या-

दुदितैरुद्गतैः अविकलैः व्यक्तोच्चारितैरित्यर्थः। अतएव मनोरमैः वीनां पक्षिणां कलैः मन्द्रस्वनैर्विनिनादितं प्रतिध्वनितम् ॥ ४ ॥

इह मरुन्नगशृङ्गसमुन्नते
विपरिवर्तितनीलशिखण्डकः।
प्रददृशेऽनुतमा नवधामधिः
स सहसा सहशालिसुराङ्गनः ॥ ५ ॥

मरुन्नगशृङ्गसमुन्नते सुमेरुशृङ्गोन्नते इहाऽस्मिन् विमाने विपरिवर्तितो नीलशिखण्डकः श्यामचूडा यस्य सः। सहशालिनी सुराङ्गना रम्भा यस्य सः एवंविधः स चित्ररथः अनुसारितं पश्चाद्विवर्तितं तमोन्धकारो येन तथोक्तो नवधामधिर्बालसूर्य्यो ददृशे॥५॥

भ्रमरसंक्रमसंप्लुवकोरकौ
मधुलतासहकारकुटाविव।
इह परस्परमेलनकोल्लसत्-
करदलौ रदलौल्यरतावुभौ ॥ ६ ॥

इहाऽस्मिन् विमाने उभौ रम्भाचित्ररथौ रदलौल्यरतौ परस्परसम्भाषणेन दन्तचापल्यपरौ तथा परस्परमेलनकेनाऽन्योन्यसंसर्गेण उल्लसन्तौ करदलौ हस्तपल्लवौ ययोस्तौ तथोक्तौ सन्तौ भ्रमरसंक्रमेण भृङ्गाक्रमणेन संप्लवाश्चञ्चलाः कोरकाः कुड्मला ययोस्तौ मधुलता वासन्ती सहकारकुटः आम्रवृक्षश्च ताविव शुशुभाते ॥६॥

अधिगतावसरो गिरिमुन्मुखम्
प्रियतमाभिमुखं पिदधद्बवा।
अरुणतां निदधद्व्यसृजत्स गाः
जनवरो नवरोचितकान्तिमान् ॥ ७ ॥

अधिगतः प्राप्तोऽवसरो भाषणावकाशोऽभ्युदयावकाशो वा येन सोऽतएव नवा रोचिता दीप्ता च कान्तिरस्याऽस्तीति तथोक्तः

जनानां गन्धर्वलोकानां वरः चित्ररथः । अरुणतां अनूरुसाधर्म्यं निदधद् धारयन् अतएव गवा दृष्ट्या कान्त्या वा उन्मुखं समीपवर्तिनं गिरिं हिमालयं पिदधदाच्छादयन् प्रियतमाभिमुखं रम्भासमीपं गाः वाणीः किरणाश्च व्यसृजत् । हिमवद्वर्णनं प्रारेभे इत्यर्थः । श्लेषः ॥ ७ ॥

सुदति पश्य कुरङ्गदृगम्बुजे
सफलयाऽऽलि विलोचनदीर्घताम् ।
गिरिरपूर्वरमो हिमवानयम्
निरवधीरवधीरवनेचरः ॥ ८ ॥

हे सुदति ! हे कुरङ्गदृगम्बुजे ! हे आलि सखि ! पश्य । विलोचनदीर्घतां नयनदीर्घतां सफलय । अयमिति हस्तनिर्देशः । निरवधिरत्यायतः रवे शब्दे विषये धीरा गंभीराः वनेचराः मृगा भिल्लाश्च यत्रैवंविधोऽपूर्वरमः अभूतपूर्वश्रीः अयं हिमवान् गिरिर्दृश्यते इति शेषः ॥ ८ ॥

प्रविकसन्मणिलोचनदीधिति-
रुपदरि स्फुटपादपसास्मितः ।
द्वयतटोत्थितभूरुहबाहुवान्
सुरवधूरवधूनयितुं स्पृहः ॥ ९ ॥

प्रविकसन्ती मणिलोचनानां शृङ्गस्थमणिनयनानां दीधितिः कान्तिर्यस्य सः । तथा उपदरि गुहामुखाभिमुखं स्फुटैर्विकसितैः पादपैर्वृक्षैः सस्मितः ईषद्धसितः । तथा द्वयतटयोरुभयपार्श्वयोः उत्थिताः उच्छ्रिताः ये भूरुहबाहवो वृक्षभुजास्तद्वान् एवंविधोऽयं हिमालयः सुरवधूराकाशादवतरन्तीरप्सरसः अवधूनयितुमालिङ्गितुं स्पृहा उद्योगो यस्य स तथाविध इव लक्ष्यते । रूपकोत्प्रेक्षा ॥ ९ ॥

ननु महोद्धतशीलसरिद्वधू-
हृतमहाविषयः सकलार्थदाः ।
शिरसि सिद्धपदाङ्कधराः शिलाः
धरति यो रतियोषिदभीप्सया ॥ १० ॥

ननु इत्युत्प्रेक्ष्यते । महोद्धतशीलाः याः सरिद्वध्वः नदीस्त्रियः ताभिर्हतो महाविषयो मृत्पाषाणादि यस्य सोऽतएव रतिरिव योषित् स्त्री तस्या अभीप्सया इच्छया योऽयं गिरिः सकलार्थदाः सिद्धपदाङ्कधराः सिद्धचरणन्यासचिह्नवहाः शिलाः शिरसि मूर्ध्नि धरति धारयति ॥ १० ॥

उपनदीतटि सुन्दरि तत्र तै-
र्निशि च भानवभानुविभासुरैः ।
मिथुनितोत्सुकचक्रपतत्रिणाम्
विरहितं रहितं मणिराशिभिः ॥ ११ ॥

हे सुन्दरि ! तत्र हिमालये उपनदीतटि नदीतटसमीपं निशि रात्रौ भानवभानुः सौरकिरणस्तद्वत् विभासुरैर्विकस्वरैः मणिराशिभिः मिथुनिते उत्सुकाः ये चक्रपतत्रिणश्चक्रवाकपक्षिणस्तेषां विरहितं विरहो रहितं त्याजितम् स्यादिति शेषः । अतिशयोक्तिः ११॥

विकलहं कलहंसरवोदयम्
कलि सरोऽलिसरोरुहरञ्जितम् ।
परिवृतं परितः सुरदारुभि-
र्वहति योऽहतियोषिदभीप्सितम् ॥ १२ ॥

योऽयं गिरिः विकलहं निरुपद्रवं, कलहंसानां रवोदयः स्वनाविर्भावो यत्र तत्, अलिप्रधानैः सरोरुहैः कमलैः रञ्जितं भूषितम्, परितः सुरदारुभिर्देवदारुभिः परिवृतं मण्डलितं, कं सुखं लाति

ददाति कलं जलं तदस्मिन्नस्तीति तत्, अहतयोऽविद्यमानक्षतयो या योषितोऽप्सरसस्ताभिरीप्सितमिष्टतमं सरो मानसं वहति धारयाति ॥ १२ ॥

कनककान्तशिलाजशिलाजतु-
स्रवणसारुणिमाग्रतटं वहन् ।
शिखरवक्त्रमुपैति तुलामयम्
सुरतिलं रतिलम्पटतैषिणाम् ॥ १३ ॥

अयं हिमवान् कनककान्तशिलाभ्यो जातं यच्छिलाजतु शैलेयं तस्य स्रवणेन द्रवणेन सारुणिम रागान्वितमग्रतटं यस्याऽतएव सुरतिलं सुप्रीतिदं शिखरवक्त्रं शृङ्गमुखमनुद्वहन् धारयन् । रतिलम्पटतैषिणां सुरताधिकशक्त्यभिलाषिणां जनानां तुलां उपैति प्राप्नोति । शिलाजतुसेवनेन खलु रतिशक्तिर्वर्द्धते इति लोकप्रसिद्धम् । उपमा ॥ १३ ॥

विरुधिरेण शरीरनिकायतो
गणयतः किमपीह न सुस्थितौ ।
अतिभयङ्करमूर्तिधरावुभौ
स्वतपसाऽऽतपसाम्यवहेन तौ ॥ १४ ॥

इहाऽस्मिन् हिमालये आतपसाम्यवहेन स्वतपसाऽतिभयङ्करमूर्तिधरौ अत्युग्ररूपमापन्नौ किञ्च विरुधिरेण शुष्केण शरीरनिकायतः शरीरनिचयेन । सार्वविभक्तिकस्तसिः । सुस्थितौ सम्यग्बद्धासनौ तावुभौ नरनारायणौ किमपि चराचरं शीतादिकं वा न गणयतः ॥ १४ ॥

ऋतुततिर्युगपन्मधुनाऽग्रतः
परिजनेन पुरीयमुपेयुषा ।

विघटिता कटकोपरि पङ्क्तिशोऽ-
प्यसमलं समलङ्कुरुतेऽमुकम् ॥ १५ ॥

अग्रतोऽस्मद्गमनात्प्रागेवाऽमुकममुं हिमालयं उपेयुषा प्राप्तवता मधुना वसन्तराजेन इयं ऋतुततिः ऋतुगणः तथा परिजनेन गन्धर्वाप्सरोगणरूपेण इयं प्रत्यक्षीक्रियमाणा पुरी गन्धर्वनगरी कटकः सेनानिवेशस्थानं अद्रिनितम्बो वा तस्योपरि पङ्क्तिशः विघटिता विरचिता सती । असमलं निर्मलमपि प्रकृतिसुन्दरमपीत्यर्थः । अमुकं हिमालयं युगपत् अलङ्कुरुते ॥ १५ ॥

अथ ग्रीष्मादारभ्य क्रमेण ऋतून् वर्णयति—

जवपरस्परघट्टननिष्पत-
ज्ज्वलनजालविलङ्घितमस्तकाः ।
उपचितास्त्वचिसारगणा इह
खरतरेऽरतरेकरतातपे ॥ १६ ॥

खरतरेऽतिप्रचण्डेऽपि रतरेकरतः सुरतहानिपरो न भवतीति तथोक्तः आतपः ग्रीष्मकालस्तस्मिन् । इहाद्रौ उपचिता विवृद्धिं प्राप्तास्त्वचिसारगणाः वंशवृक्षसमुदायाः जवेन वायुवेगेन यत्परस्परघट्टनं अन्योन्यसंघर्षस्तेन निष्पतत् यद् ज्वलनजालं अग्निजालं तेन विलङ्घितानि आक्रान्तानि मस्तकानि शिखाग्राणि येषां ते तथाविधा भवन्ति । उद्धतोऽनेकसंघट्टः परस्परकोपेन ज्वलतीति ध्वनिः ॥ १६ ॥

सपदि सम्भ्रमदा विरसोच्छिखा-
वलयचङ्क्रमणोद्धतिमत्कणाः ।
अनुविभावरि भामिनि भासुराः
वनदवा नदवारिषु बिम्बिताः ॥ १७ ॥

हे भामिनि ! विरसानां शुष्कानां लतानां यः उच्छिखावलयः तत्र चङ्क्रमणेनोद्धतिमन्तः कणाः स्फुलिङ्गाः येषां ते भासुरा वनदवा वनाग्नयः नदवारिषु विम्बिताः संक्रान्तप्रतिमाः सन्तः सपदि अनुविभावारि प्रतिक्षपं संभ्रमदाः स्युः ॥ १७ ॥

**सुखशयस्य तदा मृगयोरिह**
**मगधतां निशि याति पदायुधः ।**
**दशमितावसरे रजनेरसा-**
**वुरुचिरं रुचिरं रुतमुद्गिरन् ॥ १८ ॥**

तदा ग्रीष्मकाले इहाऽद्रौ रजनेः रात्रेर्दशमितावसरे परिणामकाले सुखशयस्य सुखशायिनो मृगयोर्मृगयासक्तस्य नृपादिकस्य असौ पदायुधः कुक्कुटः चिरं उरु महत् रुचिरं च रुतं शब्दं उद्गिरन्नुच्चारयन् मगधतां वन्दितां याति तं बोधयतीत्यर्थः ॥१८॥

**मृगधरो ध्रुवमुच्छ्रितशाखिना**
**शिरसि निज्ज्वलदुज्ज्वलपावकः ।**
**पृथुगुहाङ्कधृतद्विपमस्तकः**
**शिवतुलोऽवतु लोकगणं हि सः ॥ १९ ॥**

उच्छ्रितशाखिनोन्नतवृक्षेण मृगधरः शाखामृगादिरक्षकः पक्षे उन्नतहस्तेन मृगधारी, शिरसि शिखरे मूर्ध्नि वा निज्ज्वलन्नुज्ज्वलः पावकोऽग्निस्तृतीयनयनश्च यस्य सः पृथुगुहांके महाकन्दरोत्सङ्गे धृतः वह्निभयात् सन्निवेशितो द्विपानां मस्तको द्विपमस्तकाख्यः पुत्रो वा यस्य सोऽतएव शिवतुलः शंकरसदृशः स हिमालयः लोकगणं अवतु रक्षतु । उपमा ॥ १९ ॥

**जलतडिद्गुणमेदुरनीरदा-**
**पिहितशृङ्गसमुन्नतभूरुहः ।**

वहति स श्रियमुन्मणिदीपिता-
चलभृतोऽरभृतोऽङ्कुलितोऽम्बुदे ॥ २० ॥

स हिमवान् अम्बुदे मेघकाले जलानि जातानि अस्येति जलः। तडिद्गुणा जाता अस्येति तडिद्गुणः। अर्शआदेराकृतिगणत्वादच्। जलश्च तडिद्गुणश्च मेदुरश्चाऽसौ नीरदो मेघः तेन पिहित आच्छादितः। शृङ्गे समुन्नतो भूरुहो वृक्षो यस्य सः तथोक्तः सन् अङ्कुलितः उन्मणिदीपितं अचलं गोलोकीयं गोवर्द्धनाद्रिं बिभर्तीति तस्याऽरं शीघ्रं बिभर्ति भक्तान् पालयतीति तस्य गोलोकवासिनः कृष्णस्य श्रियं शोभां वहति ॥ २० ॥

शिखरवारिधरस्तनितैरसौ
रुचिरचन्द्रकिणामपि केकया।
प्रकुरुते विनिभर्त्सनसान्त्वने
सुमहिमा महिमानवतीजने ॥ २१ ॥

सुमहिमाऽसौ हिमवान् मह्यां यो मानवतीजनो मानिनीजनः तस्मिन् शिखरवारिधरस्तनितैः शृङ्गारूढमेघगर्ज्जितैः करणैः रुचिरचन्द्रकिणां रुचिरमयूराणां केकया केकाख्यया वाण्या च करणेन विनिभर्त्सनं च सान्त्वनश्चेत्युभयं प्रकुरुते प्रयोजयति। मेघनिनादं मयूरवाणीं च श्रुत्वाऽभिमानशालिन्योऽपि मानं त्यजन्तीति भावः। उत्प्रेक्षालङ्कारः ॥ २१ ॥

कलरवेण कपोतकुलेन यः
समदमुत्पतता मुदिरं प्रति।
सुवचनेन दवानलशान्तिदम्
तनुमताऽनुमतागमवर्षणम् ॥ २२ ॥

सपदि सत्कुरुते नवशाद्वलैः
सपुलकः सजलैः किल पल्वलैः।

अभिनवप्रियताश्रुजलाप्लुतः
सुहितता हि ततादरकारणम् ॥२३॥ युग्मम् ।

सपदि नवशाद्वलैः सपुलकः । सजलैः पल्वलैरल्पसरोभिरभिनवप्रियताश्रुजलाप्लुतः योऽयं हिमवान् दवानलशान्तिदं अनुमतागमवर्षणं अभीष्टागमनवर्षणं मुदिरं मेघं प्रत्युत्पतता कलरवेण कपोतकुलेन तनुमता मूर्तिमता सुवचनेन स्वागतवचनेन सत्कुरुते मेघस्य सत्कारं करोति । तथा हि । सुहितता हितकारिता ततादरकारणम् महादरहेतुर्भवति ॥ २२ ॥ २३ ॥

मुखरितास्तरवः किल खञ्जनैः
शरदि तत्र नु नः प्रति तन्वते ।
कुसुमभारनमन्नवपल्लवा-
ञ्जलिभृतोऽलिभृतो विजयध्वनिम् ॥ २४ ॥

तत्र हिमाद्रौ शरदि शरत्काले खञ्जनैः पक्षिविशेषैः मुखरिताः शब्दायिताः अलिभृतो भ्रमरसम्पन्नाः कुसुमभारेण पुष्पभारेण नमन्तं नवपल्लवाञ्जलिं बिभ्रतीति तथाविधास्तरवः शाखिनः नोऽस्मान् प्रति विजयध्वनिं जयशब्दं तन्वते नु इति वितर्के । उत्प्रेक्षा ॥ २४ ॥

मृदुलताकुलिता किल शारदी
हृदि समुत्कलिकाः कलिकाभरैः ।
प्रियतमायतमानवतां नृणाम्
प्रकुरुतेऽकुरुतेन पतत्कुलम् ॥ २५ ॥

मृदुलतया कोमलतयाऽऽकुलिता शरदि भवा शारदी लता कलिकाभरैः कुसुमकोरकातिशयैः तथा पतत्कुलं पक्षिवृन्दं कर्तृ । अकुरुतेन कलवासितेन करणेन प्रियतमासु आयतो मानोऽस्त्ये-

षां तेषां नृणां हृदि मनसि समुत्कलिकाः उत्कण्ठाः प्रकुरुते निदधाति ॥ २५ ॥

उपरितः पतितेन हिमेन हे
सुचिरसङ्क्रमिता तदधित्यका ।
हिमऋतौ किमपि स्मरयत्यसौ
स्नुतरसा तरसाऽऽततशाद्वला ॥ २६ ॥

हे सखि ! उपरित उपरिष्टात् पतितेन खादभिवृष्टेनाऽऽरूढेन वा हिमेन तुहिनेन नायकेन वा सुचिरं संक्रमिताऽऽच्छादिताऽऽक्रान्ता वाऽतएव स्नुतरसा स्नुतजला प्रस्यन्दमानद्रवा वा ततश्च तरसा झटिति आततशाद्वलाऽङ्कुरिततृणपुञ्जा रोमाञ्चिता चाऽसौ तदधित्यका हिमाद्रेरूर्ध्वभूमिः हिमऋतौ हेमन्ते किमपि अनिर्देश्यविषयं वस्तु स्मरयाति । स्मरणालङ्कारः ॥ २६ ॥

सा माधवी सरससौरभसिन्दुवार-
व्याकोशहासरुचिरेण चिरेण लक्ष्मीः ।
आलिङ्गिता हि शिशिरेण परेण यूना
भीतेव फुल्लसहकारदलेषु लीना ॥ २७ ॥

सरसं सौरभं मनोज्ञता यत्रैवंविधो यः सिन्दुवारव्याकोशः सिन्दुवारवृक्षविकाशः स एव हासः तेन रुचिरेण मनोहरेण परेण यूना परपुरुषयुवकरूपेण शिशिरेण शिशिरकालेन चिरेणालिङ्गिता सा माधवी वासन्ती लक्ष्मीः शोभा नायिका च भीताऽऽसन्नवसन्तस्वनायकात् त्रस्तेवेत्युत्प्रेक्षा । फुल्लसहकारदलेषु विकसितचूतपल्लवेषु लीना समाश्रिता । रूपकोत्था समासोक्तिः ॥२७॥

गच्छन्नुदीचीं दिशमनिलो निर्धुन्वन्
वल्लीं सौमस्तबकरसानादत्ते ।

व्यक्तीकुर्वन् सहचरतां धीरोऽसौ
कश्चित्कल्पं नवयुवकान् शास्त्यस्मिन् २८ ॥

अस्मिन् हिमाद्रिसम्बन्धिनि वसन्तेऽसावनिलो दक्षिणपवनः धीरो मन्दः सन् शैवीमैशानीं दिशं गच्छन् तथा वल्लीं लतां निर्धुन्वन् आकम्पयन् सौमस्तवकरसान् पुष्पगुच्छमकरन्दानादत्ते गृह्णाति । तदसौ पवनः सहचरतां गन्धर्वसयात्रतां व्यक्तीकुर्वन् प्रकटयन् नवयुवकान् गन्धर्वनवयुवकान् कश्चिदनिर्वचनीयं कल्पं सुरतक्रमं शास्त्युपदिशति । शासिर्द्विकर्मकः । विलासिनीनिधुवनावसरे धीरतया स्तनस्तवकरसो ग्राह्यः इति सुरतक्रमशिक्षाप्रकारः । जलधरमालावृत्तम् ॥ २८ ॥

उद्यानानां किसलयितानां राजौ
राजौदार्य्यैः स्फुटकुसुमैः कान्तानाम् ।
गन्धर्वाणामिह निनदः सङ्गीतः
प्रीतः प्रीतिं वितरति कर्णे तूर्णम् ॥ २९ ॥

राजवदौदार्य्यं यस्य तस्मिन्नेवंविधे इह वसन्ते स्फुटकुसुमैर्विकसितप्रसूनैः कान्तानां रम्याणां किसलयितानां नवपल्लवसम्पन्नानामुद्यानानां राजौ पंक्त्यां स्थितानां गन्धर्वाणां कोकिलानां गन्धर्वजनानां च संगीतः प्रकारितः प्रीतोऽभीष्टः निनदः शब्दः तूर्णं शीघ्रं कर्णे प्रीतिं वितरति ददाति ॥ २९ ॥

वृन्दीभूताः कुसुमरसैरामत्ता
जातानन्दाः कुसुमलिहो लेहार्हैः ।
चामत्कारीस्तुतिनिरताः प्रायस्ते
कौञ्जे पुञ्जे कलमधुरं गुञ्जन्ते ॥ ३० ॥

वृन्दीभूताः पानगोष्ठीप्रसङ्गेन पुञ्जीभूताः ततश्च लेहार्हैरास्वादोचितैः कुसुमरसैः पुष्पमद्यरसैरामत्ता उन्मत्ताः किञ्च जातानन्दाः

ये कुसुमलिहो भ्रमराः कौञ्जे कुञ्जसम्बाधिनि पुञ्जे गुल्मे कलमधुरं यथा तथा गुञ्जन्ति शब्दायन्ते ते भ्रमराः प्रायः चामत्कारी रसचमत्कारः तस्याः स्तुतौ प्रशंसायां निरतास्तत्पराः सन्ति। अपह्नुतिगर्भोत्प्रेक्षा ॥ ३० ॥

स्फुटसरोरुहरेणुसुगन्धयः
सहचरीकृतषट्पदपङ्क्तयः।
रुचिरपिष्टकणोत्किरणा भवद्-
विटजना इव भान्ति समीरणाः ॥ ३१ ॥

स्फुटानां सरोरुहाणां या रेणवो धूलयस्ताभिः सुगन्धयः सुरभयः। सहचरीकृता षट्पदपंक्तयो भृङ्गावलयो यैस्ते तथोक्ताः समीरणा वायवः रुचिरपिष्टकणोत्किरणा रक्तपिष्टातकचूर्णमुष्टिप्रेरकाः। भवतामप्सरोजनानां विटजना नर्मपुरुषा इव विभान्ति॥३१॥

सवयोभिसंहितरुतास्तरुताम्
निबिडप्रतानभुजबन्धवृताः।
अधुना प्रवासमतयोऽमतयः
प्रतियान्ति रक्तकरपल्लविताः ॥ ३२ ॥

अधुनाऽस्मिन् वसन्तकाले प्रवासमतयो विदेशगमनाय निश्चिताः अमतयो निर्बुद्धयः पुरुषाः। सवयोभिः स्वप्रियतमाभिः अभिसंहितं अभिमुखीकृतं रुतं रोदनं येषां ते तथोक्ताः। पक्षे वयसां पक्षिणामभिसंहितेन रुतेन सहिताः। निबिडेन प्रतानभुजबन्धेन प्रियतमानां लतानां वा वृता आवेष्टिताः तथा रक्तैराश्वासनपरैः लोहितैश्च करैर्हस्तैः पल्लविताः किसलयिताः सन्तस्तरुतां वृक्षसाधर्म्यं प्रतियान्ति प्राप्नुवन्ति। शब्दशक्त्युत्थितोपमा ॥ ३२ ॥

द्विजराजयो मदनतुल्यतनुम्
नृपतिं महान्तमिव हन्त मधुम् ।
प्रतिदत्ततत्तदभिलाष्यरसम्
ध्रुवमाशिषन्ति निनदैः स्वरितैः ॥ ३३ ॥

द्विजानां कोकिलादीनां पक्षिणां ब्राह्मणानां वा राजयः पङ्क्तयः प्रतिदत्ताः प्रत्यर्पितास्ते तेऽभिलाष्या मनोनुकूलाः रसाः रसालमञ्जर्य्यादयः उपभोगा वा येन तं मदनतुल्यतनुं मधुं मूर्तिमन्तं वसन्तं महान्तं नृपतिमिव स्वरितैस्तारैर्निनदैः शब्दैराशिषन्ति ध्रुवमित्युत्प्रेक्षा ॥ ३३ ॥

प्रौढो मिलिन्दयुवकोऽयमतीव रम्यो
रम्भालिपर्णकरचालतिरस्कृतोऽपि ।
तन्मञ्जरीवदनचुम्बनमाधुरीतः
सम्यक्तया परिचरत्यतिमञ्जु गुञ्जन् ॥ ३४ ॥

प्रौढोऽतीव रम्योऽयं मिलिन्दयुवको भृङ्गयुवा रम्भा कदली सैवाऽऽलिः सखी तस्याः पर्णकरचालेन पत्रहस्तचालनेन तिरस्कृतो न्यक्कृतः सन्नपि तन्मञ्जरीवदनचुम्बनमाधुरीतः कारणात् अतिमञ्जु चाटु गुञ्जन् सम्यक्तया परिचरति परितो भ्रमति अनुकूलयति वा । समासोक्तिः ॥ ३४ ॥

वापीनामिह तटवीरुदन्तरालम्
सम्भाव्यं नयनयुजां मरालयुग्मम् ।
आराजत्सरसिजचक्रचारुभासाम्
सम्पातोत्पतनगतैरलङ्करोति ॥ ३५ ॥

इहाऽस्मिन् गन्धर्वनगरे नयनयुजां सम्भाव्यं कुञ्जान्तरालोत्पातित्वादिति भावः । मरालयुग्मं हंसयुग्मं कर्तृ । आराजत्सरसि-

जचक्रचारुभासां वापीनां तटरुहास्तीरोत्पन्नाः या वीरुधो लतास्तासामन्तरालं मध्यमण्डलं सम्पातोत्पतनगतैरलंकरोति भूषयति ॥ ३५ ॥

काननानि शाखिनां घनानि रागरञ्जितानि
पल्लवालिपाणिपालिभूपतत्पतत्कुलानि ।
प्रस्फुटानि काकलीकलाप्रवीणतां गतानि
सङ्गतानि साम्प्रतं प्रताननीभिराततानि ॥ ३६ ॥

साम्प्रतमिदानीं वसन्तकाले प्रतानिनीभिर्लताभिः सङ्गतानि आततानि प्रस्फुटानि विकसितमुखानि रागरञ्जितानि तथा पल्लवालिपाणिपालिभ्यां भुवि पतन्ति पतत्कुलानि काकिनीसवर्णपक्षिवृन्दानि येषां तानि घनानि शाखिनां काननानि वनानि काकिनीकलायां वराटकक्रीडायां या प्रवीणता चतुरता तां गतानि प्राप्तानि खलु । चञ्चलावृत्तम् ॥ ३६ ॥

सर्वोऽपि वेश्याभिमुखं व्यनक्ति
दीनारकं संश्रयिकन्तुकन्तुः ।
बध्नाति नाऽसावपि वीक्ष्य काम-
दीनाऽरकं संश्रयिकं तु कं तु ॥ ३७ ॥

संश्रयी संश्रयवान् कन्तुः कामो यत्रैवंविधं कन्तु हृदयं यस्य स तथोक्तः कामातुर इत्यर्थः । सर्वोऽपि जनः वेश्याभिमुखं दीनारकं सुवर्णमुद्रां व्यनक्ति दर्शयति । कामदीनाऽसौ वेश्याऽपि वीक्ष्य सुवर्णमुद्रां विलोक्य कं तु अरकं चूर्णकुन्तलं न बध्नाति तथा कं तु संश्रयिकमागन्तुकं जनं न बध्नाति आवृणोति । सर्वमेव बध्नातीत्यर्थः । यमकम् ॥ ३७ ॥

वीरुत्तरुमाली कान्तं प्रियताली
लक्ष्मीर्हरिदास्यं दूत्यः प्रियभाष्यम् ।

कान्तं पिककान्ता क्वाणं किल कान्ता
पद्मं सरसी नेदानीं विजहाति ॥ ३८ ॥

इदानीं वसन्तकाले वीरुत् लता तरुं वृक्षं न विजहाति त्यजति । तथा प्रियतालो प्रेमभृङ्गी आली सहचरी कान्तं वल्लभं, लक्ष्मीः शोभा हरितां आस्यं मुखं दिङ्मुखमित्यर्थः । दूती प्रियभाष्यं प्रियं प्रति वर्णनीयं सन्देशम्, पिककान्ता कोकिला कान्तं रम्यं क्वाणं शब्दम्, कान्ता रम्या सरसी पद्मं कमलं न विजहाति । दीपकालङ्कारः ॥ ३८ ॥

एते द्वे इह सम्मते समबले क्रीडावलीढात्मनाम्
लोकानां करपल्लवद्वयगते सुस्मेरचक्षुष्मताम् ।
धारायन्त्रविलासिनीस्तनयुगे गाढानुरागाकुलं
ह्येकं कर्षति नीरपूरमपरं कामातुराणां मनः ३९॥

इहाऽस्मिन् वसन्ते एते द्वे वस्तुनी समबले तुल्यबले संम्मते । के ते द्वे क्रीडावलीढात्मनां सुस्मेरचक्षुष्मताम् लोकानां करपल्लवद्वयगते धारायन्त्रं 'पिचकारी' ति ख्यातं विलासिनीस्तनयुगञ्चैते द्वे । किं तत्समबलत्वम् एकं धारायन्त्रं तु गाढानुरागाकुलं सान्द्ररङ्गान्वितं नीरपूरं कर्षति । अपरं विलासिनीस्तनयुगं च गाढानुरागाकुलं गाढप्रेमाकुलं कामातुराणां मनः कर्षति । तुल्ययोगिता ॥ ३९ ॥

राज्ञा गूढचरैः चरैः सुचतुरैराप्तैर्विना भाविना
नो लभ्येत समस्तविश्वविजयोऽप्याबिभ्रता शक्तताम् ।
पश्येदं भुवनं शनैर्वशयति प्राप्तावकाशो मधुः
श्रीखण्डाद्रिसमीरणैर्जनमनःस्वाविश्य धीरैर्विभुः ४०

शक्ततां सामर्थ्यं आबिभ्रताऽपि भाविना राज्ञाऽऽप्तैर्हितैः सुचतुरैर्गूढचरैः चरैः प्रणिधिभिर्विना समस्तविश्वविजयो नो लभ्येत

नैव लब्धुं शक्यते । शक्यार्थे लिङ् । विभुः प्राप्तावकाशो मधुः वसन्तः धीरैरनुकूलवाहिभिः श्रीखण्डाद्रिसमीरणैर्दक्षिणदिक्पवनैः जनमनःसु आविश्य प्रविश्य शनैरिदं भुवनं वशयाति वशीकुरुते पश्य । अर्थान्तरन्यासः ॥ ४० ॥

नो सम्पत्त्यभिमानसत्वमुररीकार्यं कदाचित्क्वचित्
यानेतानगमान् लसत्किसलयान् पुष्पस्वनत्षट्पदान् ।
सम्पन्नान् पिककाकलीकलरवैरालोकयामः कियत्-
कालान्ते विकलान् प्रचण्डतपनातापप्रतप्तांश्च तान् ४१

कदाचित् क्वचित् कुत्राऽपि सम्पत्त्यभिमानसत्वं नो उररीकार्यमङ्गीकर्तव्यम् । तथा हि यानेतानगमान् वृक्षान् लसत्किसलयान् पुष्पस्वनत्षट्पदान् पिककाकलीकलरवैः सम्पन्नान् आलोकयामः पश्यामो वसन्ते इत्यर्थः । तानेव वृक्षान् पुनः कियत्कालान्ते प्रचण्डतपनातापैः तीक्ष्णसूर्यातपैः प्रतप्तान् अतएव विकलान् विवर्णांश्च आलोकयामो द्रक्ष्यामः । अर्थान्तरन्यासः ॥ ४१ ॥

सा गन्धमादनलताकुसुमौघशोभा
गन्धर्वपुङ्गवकलैकनिधिः पुरीयम् ।
देवाङ्गनाश्च रतिकेलिकलाविदस्ताः
किं तन्न येन मुनिमानसमोहनं स्यात् ॥४२॥

सा तादृशी गन्धमादनलताकुसुमौघशोभाऽस्ति । इयमीदृशी गन्धर्वपुङ्गवकलैकनिधिः पुरी गन्धर्वनगरी वर्तते । तास्तथाविधा रतिकेलिकलाविदो देवाङ्गनाश्च सन्ति । येन मुनिमानसमोहनं न स्यात् तत् वस्तु किं न किमपीत्यर्थः । सर्वैवेयं मुनिमानसमोहनसामग्रीति भावः ॥ ४२ ॥

इत्यूचिवानेष महातुरङ्गै-
र्विवर्तमानैरथ हेषमाणैः ।

उन्मत्तमातङ्गघटानिबन्धै-
र्गन्धर्वसेनाशिबिरं प्रपेदे ॥ ४३ ॥

इतीत्थं ऊचिवान् कथितवान् एष गन्धर्वराजः विवर्तमानैः श्रमापनोदाय भूपृष्ठे विचेष्टमानैः अथ पुनः हेषमाणैः हेषारवं वितन्वद्भिः महातुरङ्गैर्महाश्वैः तथा उन्मत्तानां मातङ्गानां हस्तिनां ये घटा निबन्धास्तैश्चोपलक्षितं गन्धर्वसेनाशिबिरं गन्धर्वचमूकटकं प्रपेदे प्राप्तः ॥ ४३ ॥

रम्भाया रहसि मुनीन्द्रलोभनार्थो
द्वित्राहः सममिह पञ्चषैः प्रपञ्चः ।
निर्णीतः प्रतुलिततर्कवादयुक्ति-
र्दिद्रेके निगदितखण्डमण्डनोक्तिः ॥ ४४ ॥

इति श्रीसदानन्दकृतौ नरनारायणीये काव्ये षष्ठः सर्गः ॥ ६ ॥

इहाऽस्यां गन्धर्वनगर्यां रहस्येकान्ते पञ्चषैः पुरुषैः समं सार्द्धं मुनीन्द्रलोभनार्थः नरनारायणविलोभननिमित्तकः । द्वे वा त्रीणि वा द्वित्राणि द्वित्रेषु अहःसु भवो द्वित्राहः । निगदिताः खण्डमण्डनोक्तयो यत्राऽतएव प्रतुलितास्तर्कवादयुक्तयो येनैवंविधो रम्भायाः निर्णीतः प्रपञ्चो दिद्रेके सर्वोत्कर्षं प्राप ॥ ४४ ॥
इति श्रीसदानन्दसूनुवाणीविलासकृतायां दिग्दर्शिनीसमाख्यायां नरनारायणीयकाव्यव्याख्यायां षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ।

अन्येद्युः कनककमण्डलुं दधानो
हंसेनाऽमलगरुता समुह्यमानः ।
मायावी स्फुरदुपवीतसूत्रतन्तु-
र्मेधावानभिमुनि विश्वसृड् विवाय ॥ १ ॥

अन्येद्युरन्यस्मिन् दिने चतुर्थेऽह्नीत्यर्थः । कनककमण्डलुं दधानः अमलगरुता श्वेतच्छदेन हंसेन समुह्यमानः वाह्यमानः स्फुरदुपवीतसूत्रतन्तुः मेधा बुद्धिरस्मिन्नस्तीति मेधावान् मायाऽस्मिन्नस्तीति मायावी कृत्रिम इति यावत् । विश्वसृड् ब्रह्माऽप्सरःकल्पित इति शेषः । अभिमुनि मुनिसमीपं विवाय जगाम । अजेर्वी आदेशे रूपमिदम् ॥ १ ॥

कौण्डेयैरुदपृषतैरथाऽभिषिञ्चन्
दर्भाग्रैरलमधुना तपःप्रयासैः ।
सिद्धोऽसि स्वयमिति वाङ्मुखप्रबन्धं
बध्नानः कृतकविरञ्चिरेवमूचे ॥ २ ॥

अथाऽभिमुखगमनानन्तरं कृतकविरञ्चिरप्सरोमायाप्रपञ्चितो ब्रह्मा दर्भाग्रैर्दर्भाग्रोद्धृतैः । कुण्डी कमण्डलुः । 'जानपद-' इत्यादिना ङीप् । तस्या इमानि । 'स्त्रीभ्यो ढक्' इति ढक्प्रत्ययः । तैः उदपृषतैः जलबिन्दुभिः । उदकशब्दस्योदन्नादेशः । अभिषिञ्चन् उक्षन् । तथा-'स्वयं वरदानं विनैव सिद्धोऽसि तदधुना तपःप्रयासैः अलं तपःप्रयासा न कार्या इत्यर्थः ।' इति एवमर्थपोषकं वाङ्मुखप्रबन्धं प्रारम्भिकमुपोद्घातं बध्नान ऊचे वक्ष्यमाणप्रकारमुवाच ॥ २ ॥

स्थाण्डिलत्वं यमनियमाघमर्षणानाम्
हित्वैकं फलमतुलं स्वराजधानीम् ।
प्राप्यैनां सपदि सनाथयाऽतिशोकाम्
सम्भारैरधिकमलङ्कृतां विहारैः ॥ ३ ॥

हे वत्स ! स्थण्डिले शेते इति स्थाण्डिलः । शैषिकोऽण् । तस्य भावस्तत्त्वं स्थण्डिलशायित्वमित्यर्थः । हित्वा त्यक्त्वा । यमा इन्द्रियनिग्रहादयः नियमाः कायिककर्मादयः अघमर्षणानि

अघमर्षणमन्त्रजपाश्च तेषां एकं मुख्यं अतुलमनुपमं फलं फलस्वरूपां सम्भारैः त्वद्राज्याभिषेकविवाहाद्युपकरणैः विहारैर्विहारयोग्यप्रदेशैश्चाऽधिकमलङ्कृतां तथाप्यतिशोकां त्वदनुपस्थितिमात्रेण सविषादां अन्यथासर्वसुखसम्पन्नामिति यावत् । एनामिति गन्धर्वपुरीनिर्देशोऽयम् । स्वराजधानीं प्राप्य सपदि सनाथय सनाथां कुरु ३॥

स्त्रैणेऽस्यामतिरतिकान्तिनि स्वकीये
षड्रागाः सममृतुभिः कृतानुरागाः ।
त्यक्त्वाऽमी निजनिजदेशवासभूमीः
शोभन्तेऽतनुकमनीयमूर्तिमन्तः ॥ ४ ॥

अतिरतिकान्तिनि रतिशोभातिशायिनि स्वकीये स्त्रैणे भैरव्यादिस्त्रीसमूहे कृतानुरागाः कृतप्रेमाणः अतनुः कामस्तद्वत्कमनीया मूर्तिरेषामस्तीति तथोक्ताः। विरोधाभासः। अमी षड्रागाः शिवपार्वतीमुखोद्भूताः भैरवादयो रागाः निजनिजदेशवासभूमीः त्यक्त्वाऽस्यां राजधान्यां ऋतुभिर्वसन्तादिभिः समं सार्द्धं शोभन्ते। त्वत्सभाजनायेति भावः ॥ ४ ॥

आसन्ना नवनिधयो विभान्ति तस्याम्
किं कोशैः परिजनपोषणार्थमन्यैः ।
रोचन्ते विबुधवधूमुखप्रकाशै-
र्वेश्मानि स्फुरदुपचारवन्ति तानि ॥ ५ ॥

तस्यां राजधान्यां नवनिधयः शङ्खपद्मादयः आसन्ना अभिमुखस्था विभान्ति । परिजनपोषणार्थं कुटुम्बभरणायाऽन्यैः कोशैः किं प्रयोजनं न किमपीत्यर्थः । स्फुरन्तोऽमी उपचाराः अमूल्यकम्बलासनादय एषु सन्तीति तथोक्तानि तानि वेश्मानि गृहाभ्यन्तराणि विबुधोपभोग्या वध्वः तासां मुखप्रकाशैः मुखदीप्तिभिः रोचन्ते प्रकाशन्ते किमन्यैर्दीपैरिति भावः ॥ ५ ॥

भ्राजन्ते विमलसुधासरोवराणि
वैरूप्यक्रशिमनिवर्तनक्षमाणि ।
निःश्रेणीमणिमयकुट्टिमांशुजालैः
स्नानाय स्फुटनलिनीवनानि तत्र ॥ ६ ॥

तत्र तस्यां राजधान्यां निःश्रेणीनां सोपानानां ये मणिमयकुट्टिमाः मणिखण्डप्रचुरनिबद्धभूमयः तासामंशुजालैः किरणसमूहैः स्फुटं विकसितं नलिनीवनं येषु तानि । वैरूप्यं वलीपलितादिरूपं क्रशिमा शरीरदौर्बल्यं च तयोर्निवर्तनेऽपनयने क्षमाणि समर्थानि विमलसुधासरोवराणि स्नानाय प्रयोजनाय भ्राजन्ते ॥ ६ ॥

सुन्दर्य्याः स्वचरणरागलब्धशोभै-
र्व्याकोशैर्दयितमनोरमैरशोकैः ।
राज्यं त्वय्यवति ततो मनोधिनाथे
सम्प्राप्तप्रयतफलेऽतिभाविता तैः ॥ ७ ॥

सुन्दर्य्याः भाविपत्न्याः मनोधिनाथे प्राणनाथे त्वयि नारायणे ततस्तस्यां नगर्य्यां । सार्वविभक्तिकस्तसिः । राज्यं अवति पालयति सति तथा सम्प्राप्तं प्रयतफलं तपःफलं अपूर्वललनासुररूपं येन तस्मिन्नेवंविधे च सति तैः अशोकैः वृक्षविशेषैः सुन्दर्यास्त्वत्प्राणवल्लभायाः स्वचरणरागेण पादालक्तकेन लब्धा शोभाऽङ्गनरूपा यैस्तैरतएव व्याकोशैर्विकसितैः ततश्च दयितस्य तव मनोरमैरतिसम्यक् भाविता । भावे लुट् ॥ ७ ॥

ते चाऽन्ये सहसुभगामुखारविन्दा-
न्निष्ठ्यूतं सरसमुपासते चिरेण ।
गण्डूषं पुलकितगण्डपालिरम्यम्
सौभाग्यं जनय तया समं समेषाम् ॥ ८ ॥

तेऽन्येऽन्यभेदविशिष्टाश्चाऽशोकाः सहसुभगायाः सभर्तृकायाः स्त्रियाः मुखारविन्दात्सकाशात् पुलकितगण्डपालिरम्यं यथा स्यात्तथा निष्ठ्यूतं निःसृतं सरसं गण्डूषं चिरेण बहोः कालादुपासते आशासते । तत् तयाऽऽत्मनो भाविधर्मपत्न्या समं सार्धं समेषां सर्वेषामेव सौभाग्यं जनय उत्पादय । यदा त्वं स्वपत्न्या सङ्गमिष्यसि तदा तस्याः सौभाग्यवत्याः मुखगण्डूषपतनेनाऽशोकाः रक्ता विकसिष्यन्तीति सरलार्थः ॥ ८ ॥

उन्मीलन्मणिनिकरप्रभाप्ररोहै-
राक्रीडाः सुरतरुभिः श्रियं श्रयन्ते ।
नो निद्रा न च किल वैकलीन्द्रियाणाम्
तत्रत्यानुभवपथं क्वचित्प्रयाति ॥ ९ ॥

आक्रीडाः उद्यानानि उन्मीलन्तो विकसन्तो मणिनिकराणामिव प्रभाप्ररोहाः दीप्त्यङ्कुराः येषां तैस्तथाविधैः सुरतरुभिः कल्पवृक्षैः श्रियं शोभां श्रयन्ते प्राप्नुवन्ति । किं बहुना इन्द्रियाणां वैकली वैकल्यं निद्रा च क्वचित्कदाचिदपि तत्रत्यानां तद्राजधानीनिवासिनां अनुभवपथं अनुभवमार्गं न प्रयाति ॥ ९ ॥

सञ्जाताप्रतिमितकौतुका चकास्ति
पीनोरुस्तनजघना सुलक्षणाङ्गी ।
सौख्यानामवधिरलङ्कृतिर्गृहाणाम्
सा लक्ष्मीस्तव महिषी प्रतीक्षमाणा ॥ १० ॥

सञ्जातं अप्रतिमितं अनुपमितं कौतुकं विवाहमंगलसूत्रं त्वत्समागमाभिलाषो वा ब्रह्मणो वचनेन नारायणोऽवश्यमागमिष्यतीति रूपं वा कौतुकं यस्याः सा तथोक्ता पीनोरुस्तनजघना सुलक्षणाङ्गी वरवर्णिनी सौख्यानामवधिः गृहाणामलङ्कृतिः अलंकारभूता लक्ष्मीः तद्रूपिणी सा तव महिषी भाविष्यत्पत्नी प्रतीक्षमाणा त्वन्मार्गमालोकमाना चकास्ति विराजते ॥ १० ॥

भावत्काभ्युदयनिमित्तमत्र कन्याः
कैन्नर्य्यः सुखमवचित्य कल्पवल्लीः ।
कौसुम्भं मृदुलतराम्बरं वहन्त्यः
सम्फुल्लाननवनजाः स्रजो ग्रथन्ते ॥ ११ ॥

अत्र राजधान्यां कुसुम्भेन रक्तं कौसुम्भं मृदुलतराम्बरं वहन्त्यो वसानाः कैन्नर्य्यः कन्याः भावत्काभ्युदयनिमित्तं त्वदभ्युदयहेतोः कल्पवल्लीः सुखमवचित्य कुसुमानीति शेषः । सम्फुल्लाननकमलाः सत्यः स्रजो मालाः ग्रथन्ते गुम्फन्ति ॥ ११ ॥

कल्याणी तव जननीह मूर्तिराରा-
दाराध्याननुनयते ननूदयाय ।
आगत्याऽमरवचनैः पुरं पुरन्ध्री-
मध्यस्था करकृतमङ्गलाभिरामा ॥ १२ ॥

इहाऽस्यां नगर्य्यां कल्याणी तव जननी माता मूर्तिः अमरवचनैः देवानुरोधेन पुरमागत्य पुरन्ध्र्यः पतिपुत्रवत्यः स्त्रियः तासां मध्यस्था करकृतेन हस्तनिहितेन मङ्गलेन मङ्गलद्रव्येणाऽभिरामा सती तवोदयाय निर्विघ्नाभ्युदयसिद्धये आरादाराध्यानिष्टदेवतानि अनुनयते प्रार्थयति ॥ १२ ॥

नान्दीयं श्रवणपथातिथिर्नदन्ती
दिक्चक्रं प्रतिनिनदैर्मधूकरोति ।
गीयन्तेऽतुवरतराणि मङ्गलानि
क्षीयन्ते हृदयमलाधयो जनानाम् ॥ १३ ॥

इयं नदन्ती श्रवणपथातिथिर्नान्दी नान्दीनादः प्रतिनिनदैः प्रतिध्वनिभिः दिक्चक्रं दिगन्तरालं मधूकरोति मधुरयति । तथाऽतुवरतराणि अकटुकानि अतिमधुराणीत्यर्थः । मङ्गलानि गीयन्ते-

ऽतएव जनानां श्रोतॄणां हृदयमलाधयः मनोमलरूपाश्चिन्ताः क्षीयन्ते क्षीणा भवन्ति ॥ १३ ॥

निर्य्याणैरिभयुवतिर्मदेन किञ्चिन्-
मन्दाक्षं सुभग समक्षहास्तिकं तत् ।
हस्तेनोन्नतमनुकूलयत्यमुष्याम्
वर्णाद्यैरुपहितकल्पनाप्रकाण्डम् ॥ १४ ॥

इभी चाऽसौ युवतिश्चेति इभयुवतिः । 'पोटायुवति–' इति समासः । वर्णाद्यैरास्तरादिभिः उपहिता प्रकल्पिता या कल्पना सज्जना तया प्रकाण्डं प्रशस्तम् उन्नतं समक्षं यद् हास्तिकं हस्तिवृन्दं तत् कर्मपदम् । निर्य्याणैरपाङ्गमोक्षैः हस्तेन शुण्डादण्डेन च मदेन हेतुना किञ्चिन्मदाक्षं ईषल्लज्जं यथा स्यात्तथाऽनुकूलयति स्वायत्तीकरोति । उन्नतं मानोन्नतं । सुभगेति सम्बोधनम् । अमुष्यां राजधान्याम् । त्वद्राज्याभिषेकशोभार्थं हास्तिनोऽपि सुसज्जिताः किन्त्वनायकत्वात्प्रमाद्यन्तीति भावः ॥ १४ ॥

माणिक्यैर्विघटितभद्रमण्डपेयम्
रम्भाभिस्त्रिविधसमीरसेविताभिः ।
आच्छन्नाः प्रणयसखीजनोपमाभि-
र्मन्दारोपवनतलस्थली विभाति ॥ १५ ॥

माणिक्यैर्मणिमुक्तासमूहैः विघटितभद्रमण्डपा विरचितसर्वतोभद्रमण्डपा इयं मन्दारोपवनतलस्थली । त्रिविधः मन्दः सुगन्धः शीतलो वा द्रुतो मध्यो विलम्बितश्च यः समीरो वायुः नायकश्च तेन सेविताभिराकम्पिताभिरुपभुक्ताभिर्वाऽतएव प्रणयसखीजनोपमाभिः रम्भाभिः कदलीस्तम्भैराच्छन्ना गुप्तान्ता विभाति ॥ १५ ॥

आमुक्तव्यजनविराजिरत्नराजि-
भ्राजिष्णुद्रुतकनकातपत्रमेतत् ।

गन्धर्वामरललनामुनिप्रभेदैः
श्रीभास्वानिव भगवानुपास्यमानम् ॥ १६ ॥

आमुक्ताभ्यां उभयतो लम्बिभ्यां व्यजनाभ्यां चामराभ्यां विराजते यत्तत् रत्नराजिभ्राजिष्णु एतद्धृतकनकातपत्रं प्रतप्तचामीकरच्छत्रं भगवान् श्रीभास्वानिव गन्धर्वामरललनामुनिप्रभेदैः उपास्यमानं विभाति ॥ १६ ॥

पर्यङ्का प्रतिपदमत्र निष्कलङ्काः
साभोगा भृशमधिवासिताः सुगन्धैः ।
आलेपैर्मलयजयक्षकर्दमाद्यै-
रङ्कस्थैरुचितललामतामुपेताः ॥ १७ ॥

अत्र राजधान्यां पदे पदे प्रतिपदं प्रतिविहारस्थानं निष्कलङ्काः निर्दोषाः शास्त्रोक्तलक्षणसम्पन्नाः मत्कुणाद्युपद्रवरहिताश्चेति यावत् । साभोगाः आस्तरणगेन्दुकाद्याभोगसम्पन्नाः । अङ्कस्थैरुत्सङ्गवर्तिभिः मलयजयक्षकर्दमाद्यैः सुगन्धैरालेपैः भृशमधिवासिताः सुरभिताः पर्यङ्काः मञ्चाः उचितानां तदर्हाणां ललामतां रत्नत्वमुपेताः प्राप्ताः ॥ १७ ॥

उद्वाहाध्वरविधयेऽनवद्यविद्या-
धर्य्यो याः सवनरताङ्गुलिप्रबन्धाः ।
एतासामतिशयिनीं तनोति चन्द्रा-
पीडोऽयं तिलकितभालभव्यशोभाम् ॥ १८ ॥

या इमाः अनवद्यविद्याधर्य्यः उद्वाहाध्वरविधये विवाहयज्ञानुष्ठानाय सवने यज्ञौषधिकुट्टने रतो व्यग्रोऽङ्गुलिप्रबन्धो यासां तास्तथाविधाः दृश्यन्ते । एतासां विद्याधरीणां अयं चन्द्र इवापीडः सीमन्तभूषणं कर्ता तिलकितस्य मङ्गलार्थं कृततिलकस्य

भालस्य भव्या प्रकृतिसुन्दरी या शोभा तामतिशयिनीं आधिक्ययुक्तां करोति सम्पादयति ॥ १८ ॥

वेल्लन्ति प्रबलनितम्बनुन्नदोलाः
खेलन्ति प्रमुखमिथोनिबद्धहस्ताः ।
माङ्क्षन्ति स्मरमदविह्वला विहारम्
वर्षन्ते दयितजनेऽत्र देवकन्याः ॥ १९ ॥

अत्र नगर्यां काश्चिद्देवकन्याः प्रबलेन नितम्बेन नुन्नाः प्रेरिताः दोलाः याभिस्तास्तथाविधाः सत्यः वेल्लन्ति दोलया सञ्चरन्ते । अन्याः प्रमुखमभिमुखं मिथो निबद्धौ परस्परसङ्गतौ हस्तौ यासां तास्तथोक्ताः सत्यः खेलन्ति हल्लीशक्रीडां कुर्वन्तीत्यर्थः । अपराश्च स्मरमदेन काममदेन विह्वलाः सत्यः विहारं माङ्क्षन्त्यभिलषन्ति । अतएव दयितजने प्रेयसि वर्षन्ते स्निह्यन्ति च । वृषू स्नेहने ॥ १९ ॥

प्रासादैर्विशदसुधावधौतशृङ्गै-
र्गोमल्लीललितलतानिकुञ्जपुञ्जैः ।
निष्यन्दैरमृतमयैः स्वयंप्रकाशा
गोलोकं युवतिशतैर्लघूकरोति ॥ २० ॥

स्वयंप्रकाशा सूर्य्यचन्द्रकान्त्या विनाऽपि प्रकाशमानाऽसौ राजधानी विशदसुधावधौतशृङ्गैः प्रासादैर्हर्म्यैः तथा गोसंश्रिताः याः मल्लीप्रधानाः लताः । शाकपार्थिवादित्वात्साधुत्वम् । तासां ये निकुञ्जपुञ्जास्तैश्च । अमृतमयैर्निष्यन्दैश्च युवतिशतैश्च हेतुभिः गोलोकं लघूकरोति अधरीकरोति ॥ २० ॥

आस्माकी मतिरपि तां विलोक्य लोला
दोलायाः स्पृशति तुलामदृष्टपूर्वाम् ।

मन्ये सा तव तपसोपपादिताऽन्यै-
र्गम्येयं बत मनसाऽपि नाऽवनेयैः ॥ २१ ॥

अदृष्टपूर्वां तां राजधानीं विलोक्याऽस्माकं विश्वविधातृणा-मियं इत्यास्माकी मतिर्बुद्धिरपि दोलायास्तुलां साहश्यं स्पृशति प्राप्नोति । सेयं पुरी तवैव तपसोपपादिता विघटिताऽतोऽन्यैस्त्वद्-तिरिक्तैरावनेयैर्भौमैः पुरुषैः मनसाऽपीयं न गम्या ॥ २१ ॥

एते ते हुतवहवर्चसो मुनीन्द्रा-
श्चूडाला भवदभिषेकसंहृता भोः ।
त्वन्मार्गे प्रणिहितदृष्टयः श्रयन्ते
नेत्रान्ते सममरुणेन शोणिमानम् ॥ २२ ॥

हुतवहवर्चसोऽग्नितेजसश्चूडाला जटाधारिणो महातपस इत्यर्थः । ते एते मुनीन्द्राः मदङ्गप्रभवाः सप्तर्षयः भवदभिषेकसंहृता त्वद्रा-ज्याभिषेकार्थं समागताः ममाज्ञयेति शेषः । त्वन्मार्गे प्रणिहित-दृष्टयः चिरात्संसक्तनयनाः इमे नेत्रान्तेऽरुणेन सूर्य्येण समं सार्द्ध-मेव शोणिमानं रक्तत्वं श्रयन्ते वहन्ति । त्वदागमनमार्गमालोक-मानानां तेषां सूर्य्योऽप्यस्तं गतः । अथाऽपि चेत् त्वं न गमि-ष्यसि तर्हि सहसा त्वां भस्मीकरिष्यन्तीति भावः । कोपानुभावोऽ-यम् । काकुः । सहोक्तिरलङ्कारः ॥ २२ ॥

उष्णांशुः प्रणिगदतो ममाऽयमाराद्
वारुण्यां दिशि परितिष्ठतेऽनुरक्तः ।
त्वां तावद्विजविरुतैर्वनान्तदेव्यो
मद्वाक्यं समुपदिशंति बोधयन्त्यः ॥ २३ ॥

मम प्रणिगदतस्त्वां बोधयत एवाऽऽरादयमुष्णांशुः सूर्य्यः चण्डस्वभावश्चेति ध्वन्यते । वारुण्यां दिशि पश्चिमायां काष्ठायां नायिकायाश्चाऽनुरक्तः सन् परितिष्ठते उद्धर वा निमज्जयेति तदा-

यत्तो भवतीत्यर्थः । स्थेयाख्यायामात्मनेपदम् । तावत् त्वां अनवगततात्पर्यं वनान्तदेश्यः द्विजविरुतैः सायंकालीनैः पक्षिकलकलैः मद्वाक्यं मद्वाक्यार्थं बोधयन्त्य इव समुपदिशन्ति प्रेरयन्तीत्यर्थः ॥ २३ ॥

काशङ्काभरविरहाद्रतिर्गिरासु
प्राप्तानां वचनरतेः किमानुकूल्यम् ।
का सेवाऽनिशमनुकूलतां विहाय
वृद्धानां परिचरणात्तपः किमन्यत् ॥ २४ ॥

प्राप्तानां प्रकर्षेण हितानां वृद्धानां गिरासु वचःसु आशङ्काभरविरहात् असन्देहादन्या का रतिः प्रीतिः सैव प्रीतिरित्यर्थः । तथा प्राप्तानां वृद्धानां वचनरतेरन्यत्किमानुकूल्यं तदेवाऽऽनुकूल्यमित्यर्थः । प्राप्तानां वृद्धानां अनिशमनुकूलतां विहायान्या का सेवा सैव सेवा इत्यर्थः । एवं वृद्धानां परिचरणात्सेवनादन्यत् किं तपः न किमपीत्यर्थः । एकावल्यलङ्कारः ॥ २४ ॥

सद्घण्टासदनसमः स यावदर्थम्
प्रोच्चार्य्योच्चटुलचतुर्मुखो महार्थम् ।
अन्तर्धां सपदि समाससाद वन्ध्यो
वन्ध्यानां विलयनमेव साधु लोके ॥ २५ ॥

उन्नतानि चटुलचतुर्मुखानि यस्य स तथोक्तोऽतएव सद्घण्टासदनसमो घण्टागृहतुल्यः स कृत्रिमो ब्रह्मा यावदर्थं यावत्प्रयोजनं महार्थं महाप्रयोजनं वाक्यं शब्दं वा प्रोच्चार्योदीर्याऽपि वन्ध्यो विफलप्रयासः सन् सपदि अन्तर्धामन्तर्धानं समाससाद । तथा हि वन्ध्यानां विफलोद्योगानां जनानां लोके विलयनमन्तर्धानमेव साधु । आद्ये पादत्रये विभावना ततोऽर्थान्तरन्यासः ॥ २५ ॥

शुद्धानां नियमितयोगधारणाभि-
र्मायेति स्थिरयति धारयेऽत्र धीनाम् ।
उद्योतैस्त्रिचतुरसङ्गताऽथ काचिद्
राकेव स्फुरितमुखेन्दुराविरासीत् ॥ २६ ॥

नियमितयोगधारणाभिः शुद्धानां धीनां बुद्धीनां धारये विभर्तरि अत्राऽस्मिन्नारायणे मायाऽप्सरसां प्रपञ्चोऽयमिति स्थिरयति निश्चिन्वति सत्येव स्फुरितमुखेन्दुः उद्योतैस्त्रिचतुरसङ्गता इव काचिदन्या दूतिः अप्सरःप्रेषिता राकेव ज्योत्स्नारात्रिरिवाऽऽविरासीत् प्रकटीबभूव ॥ २६ ॥

सा तस्याऽभिमुखमुदारविभ्रमेत्वा
प्रारेभे विनयसिताञ्जलिर्निबन्धम् ।
आयुष्मन् तव ललनाललामदूती-
मायातां शयनसखीमवेहि मां त्वम् ॥ २७ ॥

उदारविभ्रमा ललितेङ्गिता सा दूतिः तस्य नारायणास्याऽभिमुखं इत्वा गत्वा विनयसिताञ्जलिः प्रश्रयबद्धाञ्जलिः सती निबन्धं वाक्प्रपञ्चं प्रारेभे । हे आयुष्मन् ! त्वं तवाऽऽत्मनो ललनाललाम्नो भाविपत्नीरत्नस्य दूतीं संदेशहारिणीं शयनसखीं तस्याः शय्यासहचरीं आयातां मामवेहि जानीहि । न केवलं सन्देशहारिणी किन्तु तस्याः शयनसाहचर्य्यान्निखिलमपि रहस्यमहं जानामीति भावः ॥ २७ ॥

सा त्वत्तोऽप्यधिकतपस्विनी यमाह
सन्देशं शृणु वचनेन मामकेन ।
मत्पाणिप्रणयसखीं समर्प्य तुभ्यम्
कल्याणीममरतरुप्रसूनमालाम् ॥ २८ ॥

त्वत्तोऽप्यधिकतपस्विनी सा ललना मत्पाणिप्रणयसखीं इमां अमरतरुप्रसूनमालां तुभ्यं समर्प्य वितीर्य्य यं सन्देशं वाचिकमाह । तं सन्देशं मामकेन वचनेन श्रृणु ॥ २८ ॥

आयातो यदवधि मे महर्षिवाक्यात्
सोदन्तः श्रुतिविषयं हि तावकीनः ।
तत्कालात्त्वरयाति मां समागमेच्छा
प्रेष्ठानां ह्यभिमुखता स्थिरत्वहेतुः ॥ २९ ॥

यदवधि यस्मात्कालात् तावकीनस्त्वत्संबन्धी स ब्रह्मणः प्रेरणया नारायणोऽवश्यमागमिष्यतीतिरूपः उदन्तो वृत्तान्तः यदवधि यस्मात्कालात् मे मम श्रुतिविषयं कर्णगोचरतामायातः प्राप्तः । तत्कालात्तदवधि समागमेच्छा त्वत्सङ्गमाभिलाषः मां त्वरयाति अधीरयाति । तथा हि प्रेष्ठानां प्रियतमजनानां अभिमुखता पुरोवर्तित्वमेव स्थिरत्वहेतुर्धैर्यनिमित्तं भवति ॥ २९ ॥

माङ्गल्याभरणमशेषमानुपूर्व्या
स्वच्छन्दं किल दयितेन कल्पनीयम् ।
लीलातः स्वकरसरोजतः प्रदेयम्
ताम्बूलं मुख इति मे मनोरथोऽस्तु ॥ ३० ॥

आनुपूर्व्याऽनुक्रमेणाऽशेषं सम्पूर्णं माङ्गल्याभरणं मङ्गलभूषणं दयितेन मम प्रियतमेनैव स्वच्छन्दं यथेष्टं कल्पनीयं तत्तदङ्गेषु विघटनीयं किल । तथा दयितेनैव निजकरपल्लवेन लीलाभिः मे मुखे ताम्बूलञ्च देयम् इत्ययं मे मनोरथः अस्तु सम्पद्यताम् ॥ ३० ॥

चन्दिद्रीयिषतु भवान् कथन्नु तावद्
यावन्मे नयनचकोरचारुचन्द्रः ।
स्वान्तस्थं तिमिरमपाकरोतु नैव
पीयूषद्रवरतपादसङ्क्रमेण ॥ ३१ ॥

भवान् तावत् कथन्नु चन्दिद्रीयिषतु चन्द्र इवाचरति चन्द्रीयाति चन्द्रीयितुमिच्छतु चन्दिद्रीयिषतु । यावत् मे नयनचकोरयोश्चारुचन्द्रः सन् मे स्वान्तस्थं तिमिरं मनोभवरूपं नैवाऽपाकरोतु अपसारयतु । केन करणेन पीयूषद्रवेऽमृतस्यन्दने रतस्य पादस्य चरणस्य किरणस्य वा सङ्क्रमेण सङ्कलनेन ॥ ३१ ॥

शान्तिस्त्वां रिरमयिषानुरागिणी चेत्
स्तभ्नीतेऽविषमदृशं बहुप्ररूढा ।
कोऽन्यो मे ध्रुवमरणाच्छरण्यतीह
ज्योत्स्नायां निभृतमनन्यरूढभक्तेः ॥ ३२ ॥

रिरमयिषया रमयितुमिच्छया योऽनुरागः सोऽस्या अस्तीति तथोक्ता शान्तिः शमः नायिका वा बहुप्ररूढाऽपि बहुषु मुनिषु प्ररूढाऽपि बहूद्धताऽपि वाऽविषमदृशं समदर्शिनं त्वां स्तभ्नीतेऽनुरुणद्धि चेत् तर्हि इह ज्योत्स्नायां ज्योतिष्मत्यां रात्र्यां निभृतं निरन्तरं अनन्यरूढा भक्तिर्यस्याः तस्याः मे मम ध्रुवमरणादवश्यम्भाविमरणादन्यः कः शरण्यति शरण्य इवाऽऽचरति ॥ ३२ ॥

श्वोभूते ध्रुवममराङ्गनानुरोधा-
दागन्ता निजजननीवचोभिरार्य्यः ।
प्राणेऽस्मिन् कथमपि रोधितप्रयाणे
कस्तावान् दयितजने हठस्तवाऽयम् ॥ ३३ ॥

श्वोभूते प्रातःकाले जाते रजनिविनिर्गमे इत्यर्थः । अस्मिन् हतके प्राणे कथमप्युपायविशेषैरित्यर्थः । रोधितप्रयाणे निरुद्धनिष्क्रमणे जाते सति निजजननीवचोभिः स्वमातृवचनैर्ध्रुवमवश्यमार्य्यः आगन्ताऽऽगमिष्यति । तद् दयितजने प्रियजने तवाऽयं तावान् दुर्निवारो हठः कः ॥ ३३ ॥

प्रस्यन्दः प्रणयसुधारसस्य तेऽस्याम्
किङ्कर्यां पतति यदल्पबिन्दुदघ्नः ।
आहेयं किमपि विषं मदङ्गसर्पि
विष्टम्भप्रभव उपारमत्यवश्यम् ॥ ३४ ॥

यत् चेत् अस्यां किङ्कर्यां ते तवाऽल्पबिन्दुदघ्नः अल्पबिन्दु-प्रमाणः प्रणयसुधारसस्य प्रस्यन्दो निष्यन्दः पतति तदा विष्टम्भ-प्रभवः निश्चेष्टतासम्पादकं मदङ्गेषु सर्पति व्याप्नोतीति तथाविधं किमप्यनिर्वचनीयं आहेयं अहिसम्बन्धि विषं अवश्यमुपारमति प्रशाम्यति ॥ ३४ ॥

दाक्षिण्यं किमिदमहो यदिष्टकाले
व्युत्क्रान्ते स्फुरति महानुतापहेतुः ।
सन्तापातिशयवशान्निमीलितायां-
मासारैः किमु घनवर्षितैर्व्यृतायाम् ॥ ३५ ॥

यद् दाक्षिण्यं इष्टकाले कार्य्यकाले व्युत्क्रान्ते अतीते सति स्फुरति उत्पद्यते महानुतापहेतुः प्रभूतपश्चात्तापजनकं इदं दाक्षिण्यं किम् न किमपीत्यर्थः । दृष्टान्तमाह—व्यृतायामनृतायां कृष्यां निमीलितायां म्लानायां सत्यां घनवर्षितैरासारैर्जलधाराभिः किमु प्रयोजनम् । न किमपीत्यर्थः ॥ ३५ ॥

मञ्जूषाऽनवरतनूतनायमानै-
रापूर्णाऽबुधितचरै रसैरनेकैः ।
सुस्पर्शा नवभुजमण्डलोपधानी
मा हारि प्रबलकृतान्तवञ्चकेन ॥ ३६ ॥

अबुधितचरैः पूर्वं नास्वादितैः । भूतपूर्वे चरट् । अनवरतनूत-नायमानैः नित्यनूतनैः अनेकैः रसैरापूर्णा सुस्पर्शा नवभुजमण्डलो-

पधानी इयं मञ्जूषा स्वात्मनिर्देशः । प्रबलकृतान्तवञ्चकेन मा हारि ॥ ३६ ॥

शश्वत्स्वान्ते विरहदहनज्वालयोद्वृत्तया ते
प्राणोद्गाराः सरभसमुखादुग्धवन्मुग्धवन्मे ।
शंशाम्यन्ते कथमपि सखीकल्पिताश्वासनेन
म्लानिं कारुः कथमुपरतिं यातु बाष्पप्रवृत्तिः ॥३७॥

स्वान्ते चित्ते शश्वत् उद्वृत्तया उद्भूतया ते तव विरहदहनज्वालया हेतुना मुग्धवत्स्थितायाः मे मम उखादुग्धवत् हण्डीदुग्धतुल्याः सरभसं प्राणोद्गाराः सखीभिः कल्पितं यदाश्वासनं आश्वासनवाक्यं मुखवायुप्रचारो वा तेन करणेन कथमपि महता कृच्छ्रेण शंशाम्यन्ते पुनः पुनः शान्ता भवन्ति तत्सत्यम् । किन्तु म्लानिं कारुः ग्लानिसम्प्रतिपादिका बाष्पस्य नेत्रजलस्योष्मणश्च प्रवृत्तिः प्रवर्तनं कथमुपरतिं शान्तिं यातु नैवेत्यर्थः ॥ ३७ ॥

नित्यं नारायण नरहरे रक्ष मामक्षमिष्णुं
कन्दर्पेषुव्रणितहृदयां शीर्णचित्तां चिरेण ।
ग्राहग्रस्तं गजमिव जगज्जालभिद्भावुकानाम्
पत्युः स्त्रीणां कुशलकरणं दैवतं नान्यदस्ति ३८॥

हे नरहरे नारायण ! नित्यं कन्दर्पेषुव्रणितहृदयामतएव चिरेण शीर्णचित्तामतएवाऽक्षमिष्णुं दुःखासहिष्णुं मां जगज्जालभिद्गरुडध्वजः ग्राहग्रस्तं गजमिव रक्ष । एवं चेत्तर्हि त्वमपि गजवत्तमेव शरणं व्रज नेत्याह—भावुकेति । भावुकानां पतिव्रतानां स्त्रीणां कुशलकरणं दैवतं पत्युः स्वभर्तुरन्यत् किमपि नाऽस्ति ॥ ३८ ॥

इत्युक्त्वाऽऽसीन्मदनकदनामर्दिता म्लानमूर्ति-
र्वैक्लव्येनाऽवनितलगता लोहकारीव भस्त्रा ।

दत्तालम्बा सहचरिकया सा मुहुर्निःश्वसन्ती
सम्भाव्या तेऽकरुण दयितोपेक्षया पातकं स्यात् ॥ ३९

इत्येतावदुक्त्वा मदनकदनेनाऽमर्हितापदपीडिताऽतएव म्लान-मूर्तिः शिथिला वैकृव्येन वैचित्येनाऽवनितलगता भूमण्डलप्रसृता किञ्च सहचरिकया सन्निकृष्टया सख्या दत्तालम्बा दत्तहस्ताव-लम्बा सा मे प्रियसखी लोहकारी भस्त्रेव मुहुर्निःश्वसन्ती ते त्वया सम्भाव्याऽऽश्वासनीया । हे अकरुण ! दयितोपेक्षया प्रियावहे-लया पातकं स्यात् ॥ ३९ ॥

निष्पन्दास्ता नगनवलता हा तुषाराश्रुवर्ष्यः
श्रुत्वा नूनं परमकरुणामुक्तिमस्मिन्निशीथे ।
पाषाणात्ते कठिनमनसो लोचने नैव रागः
किञ्जानीयादपरविपदोऽज्ञातदुर्जातरूपः ॥ ४० ॥

नूनमित्युत्प्रेक्ष्यते । अस्मिन्निशीथेऽर्धरात्रे निष्पन्दा निश्चेष्टाः नगस्य हिमवतः प्रियामप्रतिगामिनश्च नवलतास्तरुण्यो लताः पर-मकरुणां उक्तिं मम वाणीं श्रुत्वा तुषाराश्रूणि वर्षन्तीति तुषारा-श्रुवर्ष्यः । 'कर्मण्यण्' 'टिड्ढाणञ्–' इति ङीप् । सम्वृत्ताः । पाषाणादपि कठिनमनसस्ते तव लोचने नयने राग एव नास्ति । न ज्ञातं दुर्जातरूपं विपत्तिस्वरूपं येन स तथोक्तः पुरुषः अपर-विपदः अन्येषां दुःखं किं जानीयात् नैवेत्यर्थः ॥ ४० ॥

अथ सा पृथुधाम्नि तत्र कुण्ठा-
मधिगम्याऽऽशु रुषा पुरं निवृत्ता ।
अभिचारसमुद्भवेव कृत्या
प्रतरां मन्त्रकृतस्तनूचकार ॥ ४१ ॥

अथ सन्देशनिवेदनानन्तरं सा दूती पृथुधाम्नि तत्र तस्मिन् नारायणे कुण्ठां अप्रसरं अधिगम्य प्राप्याऽऽशु शीघ्रं रुषा कोपेन

पुरं गन्धर्वनगरं प्रति निवृत्ता अभिचारसमुद्भवो कृत्या इव मन्त्रकृतः अविपक्वमन्त्रिणो गन्धर्वाप्सरोजनान् प्रतरां तनूचकार बबाधे । निरभर्त्सयदित्यर्थः । उपमा ॥ ४१ ॥

अथ ता वनिता वनिताय महो
मथिताम्लतापसताः प्रथिताः ।
युगपत्सकलाः सकलाकुशलाः
मुनिमेत्य महोत्सवमग्नहृदः ॥ ४२ ॥

इति श्रीसदानन्दकृतौ नरनारायणीये काव्ये सप्तमः सर्गः ॥ ७ ॥

अथ दूतीनिर्भत्सनानन्तरं मथिता अमला तापसता तपस्विधर्मो याभिस्ताः प्रथिताः प्रसिद्धास्ता रम्भादयो वनिताः अप्सरसः । महः स्वप्रभावं वनिताय विस्तार्य्य । ताय सन्ताने । कलाकुशलैर्गन्धर्वैः सहिताः सत्यः सकला एव युगपत् मुनिं नारायणमेत्य प्राप्य महोत्सवे मुनिदर्शनजन्यकौतुके तद्राज्याभिषेकसंबन्धिनि कृत्रिमे महोत्सवे वा मग्नं हृदयं यासां तास्तथाविधा आसन् । यमकालङ्कारः ॥ ४२ ॥

इति श्रीसदानन्दसूनुवाणीविलासकृतायां दिग्दर्शिनीसमाख्यायां नरनारायणीयव्याख्यायां सप्तमः सर्गः ॥ ७ ॥

---

## अष्टमः सर्गः ।

उदयी सुधार्द्रहृदयोऽपि
स जगति कठोरतां गतः ।
मातृवचनगुरुमान् रुरुचे
गुरुचन्द्रवत् समुदयाय देहिनाम् ॥ १ ॥

उदयी तपःसमृद्धिमान् अनस्तंगतश्च सुधार्द्रहृदयोऽपि कठोरतां अप्सरःसु परुषतां पूर्णतां वा गतः प्राप्तः मातृवचनैः । 'अलङ्घ्य-

मायारचनापटूनाम् ' इत्यादिरूपैर्मातुरुपादिष्टैर्वचनैः गुरुमान् दुर्निवारभावसम्पन्नः स नारायणः जगति देहिनां समुदयायाऽभ्युदयाय गुरुचन्द्रवत् बृहस्पतिसहितचन्द्र इव रुरुचे दिद्युते । उद्गतानामकं विषमवृत्तम् ॥ १ ॥

अभिवर्तिताः समवबुध्य
विबुधवनिताः परासिषन् ।
शक्तिमतुलतरभक्तिरसा-
विति वेदमातरमथाऽभ्यवन्दत ॥ २ ॥

अथ जन्महोत्सवश्रवणानन्तरं विबुधवनिताः अभिवर्तिताः अभिमुखमागताः समवबुध्य विज्ञाय समाधिनेत्यर्थः । परासिषन् ताः परास्ताः कर्तुमिच्छन् असौ नारायणः अतुलतरभक्तिः सन् शक्तिमादिशक्तिस्वरूपां वेदमातरं गायत्रीं इति वक्ष्यमाणप्रकारेणाऽभ्यवन्दताऽस्तौषीत् । वदि स्तुतौ ॥ २ ॥

श्रियमुज्ज्वलां दधदुदस्त-
नरगणसमस्तकिल्बिषाम् ।
चन्द्रवदनि वदनेन्दुरसौ
हरतान्मदीयमदतापविप्लवान् ॥ ३ ॥

उद्यतेऽनयेति वदनी । ल्युट् । वदनशब्दस्य स्त्रीत्वविवक्षायां टिड्ढाणञिति लक्षणो ङीप् । चन्द्रस्यैव वदनं मुखं यस्यास्तत्सम्बुद्धौ हे चन्द्रवदनि । लोकादुपसर्जनत्वनिरासः । यद्वा लोकादेव स्वाङ्गलक्षणो ङीष् । उदस्तनरगणसमस्तकिल्बिषां उज्ज्वलां श्रियं दधत् असौ तव वदनेन्दुः मुखचन्द्रः मदीयमदतापविप्लुवान् हरतात् ॥ ३ ॥

कुटिलान्तमप्युपागिरन्त-
मुपजनमपारसम्मदम् ।

सान्द्रमुदिररुचिरं सुचिरम्
तव भावये चिकुरभारमुज्ज्वलम् ॥ ४ ॥

कुटिलान्तं कुटिलप्रान्तमपि । चिकुरभारविशेषणमिदम् । तथापि उपजनं भक्तजनं प्रति अपारसम्पदमुपगिरन्तमभिवर्षन्तं अतएव सान्द्रस्य मुदिरस्य मेघस्य रुचिं छविं राति गृह्णाति तथाविधं तवोज्ज्वलं चिकुरभारं केशकलापं सुचिरं भावये मनसा ध्यायामि ॥ ४ ॥

अहमाश्रयेऽविरतमम्ब
पृथुक इति तत्सुधित्सया ।
डिम्भमधुरधुगुरोजभराम्
तव तारहारहरिणामुरस्स्थलीम् ॥ ५ ॥

हे अम्ब ! पृथुकोऽहं शावकोऽहमिति हेतोः तत्सुधित्सया तव स्तन्यपिपासया कारणेन । धेट् पाने । सन् । डिम्भेभ्यो वत्सजनेभ्यो मधुरं दोग्धीति तथोक्त उरोजभरः पयोधरभारो यत्र तां तारेण शुद्धेन हारेण हरिणामवदातां तवोरःस्थलीं उत्सङ्गमित्यर्थः । अविरतं नित्यमाश्रये ॥ ५ ॥

नवपल्लवारुणतलैश्च
सुरवरलताङ्कुरायितैः ।
पाशवरददरदाब्जधरैः
करपङ्कजैस्त्वमधिकं विराजसे ॥ ६ ॥

हे मातः ! त्वं नवपल्लवारुणतलैः सुरवरलताङ्कुरायितैः कल्पलताप्ररोहतुल्यैः पाशवरददरदाब्जधरैः पाशवराभयकमलधरैः करपङ्कजैः अधिकं विराजसे ॥ ६ ॥

मधुरस्मितं मुखसरोज-
मिदमलिविलासिलोचनम् ।

मातरखिलभवतापरं
भवतां भवे तव भवानि भावये ॥ ७ ॥

हे भवानि मातः! मधुरस्मितं स्पृहणीयहासं अलिविलासिलोचनं भवे संसारे भवतामुत्पद्यमानानां अखिलभवतापहरं तव मुखसरोजं भावये ध्यायामि ॥ ७ ॥

किरणावली मुखसुधांशु-
किरसहचरी विसृत्वरी ।
गाढतिमिरपटलान्तरितो-
रगराजहालहलशान्तयेऽस्तु सा ॥ ८ ॥

मुखसुधांशुकिरसहचरी त्वन्मुखचन्द्रसखी विसृत्वरी समन्ततः प्रसरणशीला सा त्वदीया किरणावली किरणमण्डली गाढस्य तिमिरस्याऽज्ञानान्धकारस्य यत्पटलं तत्राऽन्तरितो य उरगराजः महामोहजः कामः तस्य हालहलशान्तये दुर्निवारप्रसङ्गदोषनिवारणायाऽस्तु । अभेदरूपकम् ॥ ८ ॥

धिषणायते विधिषणाऽपि
विगलितयशा यशस्विनी ।
विश्वजननि जनताऽत्र भवत्-
करुणातरङ्गितदृगन्तलम्भिता ॥ ९ ॥

हे विश्वजननि! विधिषणा बुद्धिविहीनाऽपि जनता जनसमूहः भवत्करुणातरङ्गितदृगन्तलम्भिता सती धिषणो बृहस्पतिः स इवाऽऽचरति धिषणायते । एवं विगलितयशा अपि जनता भवत्करुणातरङ्गितदृगन्तलम्भिता सती यशस्विनी भवति ॥ ९ ॥

कथमाश्रियेत भुवि मोह-
विषयनिपातिष्णुरर्भकः ।

त्राणभरणकृतहस्तवती
भवती न चेत्सकरुणाऽस्मदम्बिका ॥१०॥

हे मातः ! मोह एव विषयस्तुङ्गभृगुप्रान्तदेशस्तस्मान्निपतिष्णु-र्निपतनशीलोऽर्भको बालः कथमाभ्रियेत सुरक्षितो भवेत् । कर्मकर्तरि लिङ् । चेद्यदि त्राणभरणयोर्विषये कृतो लाघवयुक्तो हस्तोऽस्याः अस्तीति तथाविधा भवती अस्माकमम्बिका माता सकरुणा न स्यात् ॥ १० ॥

विकसत्प्रसूनसुरवल्लि-
मणिमयपदाब्धिमध्यगाम् ।
बालतरणिकिरणारुणिताम्
ललितां स्मरज्जनपराभवः कुतः ॥ ११ ॥

विकसन्ति प्रसूनानि कुसुमानि यासां तास्तथोक्ता सुरवल्लयः कल्पलताः यत्रैवंविधं यत् मणिमयं पदं मणिद्वीपाख्यं स्थानम् तत्र योऽब्धिः सुधासमुद्रः तन्मध्यगां चिन्तामणिगृहस्थामित्यर्थः । बालतरणेरिव किरणैः अरुणितां लोहिनीं ललितां त्वां स्मरतां जनानां पराभवस्तिरस्कारः कुतः नेत्यर्थः ॥ ११ ॥

अजलोचनं प्रति सलील-
मरिषु परुषं मकादृशे ।
व्यक्तविदितकरुणातिशयम्
युगपच्चकास्ति तवकाक्षि नैकधा ॥ १२ ॥

अजलोचनं प्रति सलीलं, अरिषु परुषं, मकादृशे मादृशे व्यक्तविदितकरुणातिशयं सकरुणमित्यर्थः । तवक तव । अकच् । आक्षि नयनं युगपत् नैकधाऽनेकविधं चकास्ति शोभते ॥ १२ ॥

धियमातनोतु जपतां त-
दुपहततमःकदम्बकम् ।

अम्ब शरणमवतां प्रतिभू-
स्तव भूर्भुवःस्वरभिधामसंहतम् ॥ १३ ॥

जपतामुपहततमःकदम्बकम् शरणं रक्षकं अवतां ब्रह्मादीनां प्रातिभूः भूर्भुवःस्वरभिसंहतं पुञ्जीभूतं तत्तव धाम महोविशेषः धियं सदसद्विवेकवतीं बुद्धिं तनोतु विस्तारयतु ॥ १३ ॥

सततं बिभर्तु शुभवृत्ति
मम हृदयमेतदुच्चलत् ।
कल्पविटपिकुसुमस्तबक-
स्फुरदङ्घ्रिपङ्कजपरागभृङ्गताम् ॥ १४ ॥

ममैतदुच्चलद् हृदयं शुभवृत्ति भूत्वा तवेति शेषः । कल्पविटपिकुसुमस्तबकोपरि स्फुरत् यदङ्घ्रिपङ्कजं तत्परागे भृङ्गतां भ्रमरसाहश्यं बिभर्तु धारयतु । उपमा ॥ १४ ॥

इति सम्पनायितसुजूष्ठ-
समयपटुतामुपेयुषः ।
मुष्टिमाथितविरसोरुतला-
दतुलाऽऽविरास रुचिराशिरप्सराः ॥ १५ ॥

मृडमोहनीव धृतबिन्दु-
रगणितकलासमुद्रिका ।
लक्षगुणितगुणपुञ्जसहा
परिवेषिता बहुभिरप्सरोगणैः ॥ १६ ॥

इतीत्थं सम्पनायितेन संस्तवनेन यत् सुजूष्ठं देवताप्रसादः तेन या समयपटुता तत्कालीनकार्यप्रतिभा तां उपेयुषः प्राप्तवतो नारायणस्य मुष्टिमाथितं मुष्टिनिपीडितं यद् विरसं तपःशुष्कं ऊरुतलं जङ्घाप्रदेशस्तस्मात् रुचिराशिः कान्तिपुञ्जभूताऽतुलाऽनुपमाऽ-

प्सराः उर्वशीत्यर्थः । आविरास प्रकटीबभूव ॥ १५ ॥ कीदृशी मृडमोहनी शिवमोहनी हरिमायायोषिदिव धृतबिन्दुः भालकृतचन्दनबिन्दुः तथा अगणितानामसंख्यानां कलानां समुद्रिका मंजूषा । एवं लक्षगुणितानां गुणानां सौन्दर्य्यादीनां पुञ्जस्य सहा । बहुभिः अप्सरोगणैः परिवेषिता परिमण्डलिता च ॥१६॥

द्रुतमादिसम्भवतयेय-
मुदितमुपसर्गयुक्तिका ।
दिव्ययुवतिमुखदीप्तिभरम्
प्रकृतिस्थमर्थमिव पर्य्यणामयत् ॥ १७ ॥

इयमुर्वशी आदिसम्भवतया नारायणोद्भूततया क्रियादौ प्रयुक्ततया वा हेतुना, उदितंमुद्गतं दिव्ययुवतिमुखदीप्तिभरं रम्भाद्यप्सरोमुखकान्त्यतिशयं, उपसर्गयुक्तिका प्राद्युपसर्गयोजना प्रकृतिस्थं धातुस्थं अर्थमिव पर्य्यणामयत् विपरिवर्तितवती । अन्यमेव चकारेत्यर्थः । पूर्णोपमालङ्कारः ॥ १७ ॥

दहनेन हन्त हृदयान्त-
रभिपतनशीलिना मुहुः ।
पाकपुटितविषवत्सुरसाः
पुनरिद्धसिद्धरसमर्दिता इमाः ॥ १८ ॥

पुनः इद्धेन सिद्धरसेन नारायणाङ्गसम्भूतेनोर्वशीरूपेण मर्दिता ध्वंसिताभिमानाः पक्षे सिद्धरसेन सिद्धौषधीनिष्पन्नेन रसेन मर्दिताः पिष्टाः । ततश्च मुहुः हृदयान्तरभिपतनशीलिना दहनेनाऽक्षान्तिवह्निना पाकार्थं पुटितं यद्व विषं स्थावरं गरलं तद्वत् सुरसाः सुप्रीतयः सुखेन रसितुं शक्या वाऽऽसन् । इमा अप्सरसः । उर्वशीदर्शनोत्थेन कोपेन दन्दह्यमाना अपि खल्विमाः तत्प्रतीकारमपारयन्त्योऽन्ते प्रसन्नतामेवाऽऽपतिताः इति तात्पर्य्यम् । 'पदं हि सर्वत्र गुणैर्निधीयते' इति भावः ॥ १८ ॥

नयनप्रसूनकलयाऽऽलि-
जनगणविलम्भितध्वनि ।
सत्वविदितपरतत्वमिदम्
सुरयौवतं वनमिव व्यकाशत ॥ १९ ॥

नयनप्रसूनकलया नेत्रकुसुमकलिकासङ्केतेन अनेन तासां कोपशान्तिर्गम्यते । आलिजनाः अलिजनाः वा तेषां गणेन विलम्भिताः ग्राहिताः ध्वनयो वाद्यविशेषाः शब्दा वा येन तत् । अनेन नारायणगुणगानोद्योगः सूचितः । सत्वेन तपोमहिम्ना हेतुना विदितं ज्ञातं परतत्वं पारमेश्वररहस्यं येन तत् । पक्षे सत्त्वेनाऽऽकर्षणशक्त्या विदितमनुभूतं परतत्वं जलाद्यास्वादो येन तत् एवंविधं सुरयौवतमप्सरोवृन्दं वनं काननमिव व्यकाशत प्रससादेत्यर्थः ॥ १९ ॥

अथ मूर्ध्नि रम्यमनुबद्ध-
करकिसलयाञ्जलिर्मुदा ।
भृङ्गमधुरनिनदोऽस्य नुतिम्
सुरसुन्दरीजनवनस्पतिर्जगौ ॥ २० ॥

अथ मनःप्रसादानन्तरं मूर्ध्नि शिरसि रम्यं यथा स्यात्तथाऽनुबद्धः करकिसलयाञ्जलिर्येन सः भृङ्गाणामिव मधुरो निनदोऽस्याऽस्तीति तथोक्तः । अर्शआदित्वादच् । सुरसुन्दरीजनवनस्पतिः । जातावेकवचनम् । अस्य नारायणस्य नुतिं स्तुतिं वक्ष्यमाणप्रकारां जगौ ॥ २० ॥

( गीतिका )

अधुनैव सन्निधानात् तव नो मुदां निधानात् ।
विकचाक्षिपङ्कजानां परितः स्फुरन्ति भावाः ॥ २१ ॥

त्वमपूर्वमीनरूपः प्रलयाब्धिवारिचारी ।
बहुविस्मयान्यतानीर्मुनिराजमानसानि ॥ २२ ॥
भवताऽऽदिशूकरेण विधृता धरा व्यराजीत् ।
रदने समुन्नताग्रे कृतकप्रसूनलक्ष्या ॥ २३ ॥

अधुना मुदां प्रीतीनां निधानात् निधानभूतात् तव सूर्यवर्चसः सन्निधानान्नैकट्यादेव हेतोः विकचाक्षिपङ्कजानां विकसितज्ञानन-यनपद्मानां नोऽप्सरसां भावास्त्वदवतारचरितसम्बान्धिनः । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः । परितः समन्तात् स्फुरन्ति प्रतिभान्ति ॥ २१ ॥ त्वमेवाऽपूर्वमीनरूपो भूत्वा प्रल-याब्धिवारिचारी सन् मुनयः सप्तर्षयः राजा सत्यव्रतश्च तेषां मानसानि मनांसि बहुविस्मयानि प्रचुराश्चर्य्यमयानि अतानीर-कार्षीः ॥ २२ ॥ भवतैवाऽऽदिशूकरेण सता समुन्नताग्रे रदने दन्ते विधृता स्थापिता धरा हिरण्याक्षहृता पृथ्वी कृतकं शोभार्थं निर्मितं यत् प्रसूनं दन्तपुष्पं तदिव लक्ष्यानुमेया व्यराजीत् शुशुभे । अतिशयोक्तिः ॥ २३ ॥

परिपोथिताभिमाना न वयं त्रपामहेऽद्य ।
तदसीमशक्तिशालिन् कुरु यद्यदीहसे त्वम् ॥ २४ ॥
मथिताब्धिलब्धलक्ष्मीः श्रमबिन्दुमौक्तिकान्तम् ।
वपुरेतदद्भुतं ते सुतरामलञ्चकार ॥ २५ ॥
त्वमजय्यदैत्यवक्षःपरिपाटनच्छलेन ।
जगतां भयान्यकर्त्तीर्नरसिंहमूर्तिभारी ॥ २६ ॥
भवता त्रिविक्रमेण पृथुमूर्तिकैतवेन ।
त्रिदिवं हि लम्भिता साऽसुरसंहृता समृद्धिः ॥ २७ ॥

परिपोथिताभिमानाः त्वया विमर्दितरूपसौन्दर्य्याद्यभिमानाः अद्य वयम्—इति न त्रपामहे लज्जामहे । तत् तस्मात् हे असीम-

शक्तिशालिन् ! परमेश्वर ! त्वं यद् यद् ईहसेऽभिलषसि तत्तत्कुरु विधेहि । यथा बलिष्ठो वल्लभः सुरतकालीनलज्जारक्षणं कर्तुमपारयन्त्याः विवशायाः सुन्दर्य्याः बलात्कारेण यथेष्टसम्भोगं करोति तद्वत्त्वमपीति ध्वनिः ॥ २४ ॥ मथिताब्धिलब्धलक्ष्मीः श्रमबिन्दुमौक्तिकान्तं तवैतदेवाद्भुतं वपुः शरीरमलङ्कााराऽलङ्कृतवती ॥ २५ ॥ त्वमेव नरसिंहमूर्तिधारी सन् अजय्यस्य ब्रह्मणो लब्धवरस्येति यावत् । तथाविधस्य दैत्यस्य हिरण्यकशिपोर्यद् वक्षःपरिपाटनं उरोविदारणं तदेव छलं व्याजः तेन जगतां भुवनानां भयानि अकर्त्तीः विध्वंसितवानसि । व्याजोक्तिः ॥२६॥ भवता वामनेन त्रिविक्रमेण सता पृथुमूर्तिकैतवेन वैराजरूपच्छलेन सेन्द्रसम्बन्धिनी असुरसंहृता बलिराजाच्छिन्ना समृद्धिः त्रिदिवं सुरलोकं लम्भिता प्रापिता । त्वयाऽऽत्मनो वैराजी मूर्तिर्न, प्रत्युत ऐन्द्री सम्पत्तिरेव सुरलोकं प्रापितेति । अपह्नुतिरलङ्कारः ॥ २७ ॥

भुवनैकमित्रकालत्रितयेऽपि जागरूकाः ।
भवतोऽवतारचर्य्या मनसाऽप्यकल्पनीयाः ॥ २८ ॥
तव नाथ नामधेयं भवसिन्धुमध्यगेयम् ।
कुशला ह्यविस्मरन्तोऽप्यतिदुस्तरं तरन्ति ॥ २९ ॥
उपयातु हन्त सर्वार्थिकतां समागमोऽयम् ।
भगवन्तमव्ययं त्वां मनसा मिमार्गिषूणाम् ॥ ३० ॥
करुणैककोणपातोन्मथितान्यतापमर्हन् ।
अधुना निमीलितं ते नयनं किमेतदीदृक् ॥ ३१ ॥

हे भुवनैकमित्र ! कालत्रितयेऽपि जागरूकाः भवतोऽवतारचर्य्याः मनसाऽप्यकल्पनीयाः सन्ति ॥ २८ ॥ भवसिन्धुमध्यगेयं तव नामधेयमविस्मरन्तः कुशलाः भावुकाः पुरुषाः अतिदुस्तरमपि भवसागरं तरन्ति ॥ २९ ॥ अयं त्वया सह समागमः

अव्ययं भगवन्तं त्वां मनसा मिमार्गिषूणां मार्गितुमिच्छूनाम-स्माकं सर्वार्थानां निमित्तं सर्वार्थिकं तस्य भावस्तत्तां उपयातु । अनेन समागमेनाऽस्माकं सर्वेऽपि मनोरथाः सिद्ध्यन्तु इति सरलार्थः ॥ ३० ॥ करुणस्य दयार्द्रस्य एककोणस्य पातेन उन्मथिता अन्येषामस्मद्व्यतिरिक्तानां तापाः दुःखानि येन तत्तथोक्तं ते तव एतन्नयनं अधुनाऽस्मदुद्धारावसरे ईदृगेवंविधं किं निमीलितम् ॥ ३१ ॥

विवर्तिताच्चित्रगवीभिराभि-
मुखारविन्दादरविन्दभूमेः ।
अन्तर्गुहा प्रादुरभून्महर्षेः
श्रीवैखरी सम्प्रति षट्पदीति ॥ ३२ ॥

आभिरप्सरःप्रोक्ताभिश्चित्रगवीभिर्विचित्रवाग्भिः चित्रदीधितिभिर्वा । टच् । विवर्तिताद् विमुद्रितात् अरविन्दभूमेः भूतपूर्वपुष्करप्रादुर्भावस्य महर्षेर्नारायणस्य मुखारविन्दात् सकाशात् अन्तर्गुहा हृदयाभ्यन्तरवर्तिनी षट्पदी षट्पद्यात्मिका भ्रमरीरूपा वा श्रीवैखरी वाणी इति वक्ष्यमाणप्रकारेण सम्प्रति कथञ्चिदिति यावत् प्रादुरभूत् प्रकटीबभूव । रूपकालङ्कारः ॥ ३२ ॥

मन्ये तृणाय जगतीत्रयराज्यभोगा-
नेकान्तनश्वरतया हृदयापकर्षान् ।
ते पूरुषा न खलु ये न गुणार्ज्जनोत्का-
स्ते नो गुणा जगति ये न निरामयाः स्युः ॥ ३३ ॥

एकान्तनश्वरतयाऽवश्यविनाशितया हेतुना हृदयापकर्षान् आधिव्याधिप्रदानिति यावत् । जगतीत्रयराज्यभोगान् तृणाय मन्ये तृणवदवगच्छामि । कोऽयं पुनस्तपःप्रयास इत्याह—ते पूरुषा इति । जगति ये गुणार्जनोत्काः न, ते पूरुषाः न खलु । ते गुणा अपि न ये निरामया निर्विकारा न स्युः ॥ ३३ ॥

आभाषणद्वयसमुन्नतमानिनो वः
सर्वस्वमर्पयितुमुत्सुकमानसा ये ।
ते नो वयं किमिति याचत वीतरागान्
विस्रोतसो विमनसस्तपसो विकामान् ॥३४॥

ये जनाः वो युष्माकं वेश्यानां आभाषणद्वयेन ईषत्तमवार्तालापेनैवाऽऽन्मानं समुन्नतं धन्यं मन्यन्ते तथोक्ताः सन्तः । आत्ममाने णिनिः । वो युष्मभ्यं सर्वस्वमप्यर्पयितुं प्रतिदातुं उत्सुकमानसाः सहसा त्वरितहृदयाः भवन्ति । ते तथाविधाः पुरुषा वयं न । तत् वीतरागान् तत्रापि विस्रोतसस्तत्रापि विमनसस्तत्रापि तपसस्तत्रापि विकामानस्मान् किमिति याचत प्रार्थयत । परिकरालङ्कारः ॥ ३४ ॥

आयुर्यशोद्रविणबुद्धिबलापहन्त्रीम्
वाराङ्गनां क इव संजुषतां मनस्वी ।
सर्वार्थसाधनमिदं हि तपोधनं नः
प्राणैरहो गलगतैरपि रक्षणीयम् ॥ ३५ ॥

तपस्विनो विकामाः कथमपि न समर्थ्यन्ते ननु तत्सत्यम् । आयुर्यशोद्रविणादिकं प्रति तेषां सकामत्वेऽपि वाराङ्गनाभिर्न कोऽपि कामः सिद्ध्यतीत्याह । आयुर्यशोद्रविणबुद्धिबलापहन्त्रीं वाराङ्गनां वेश्यां क इव मनस्वी सञ्जुषताम् सेवताम् । न कोपीत्यर्थः । तथा हि सर्वार्थसाधनं आयुर्यशोद्रविणादिसाधनमिदं तपोधनं नोऽस्माकं गलगतैरपि कण्ठगतैरपि प्राणैः रक्षणीयम् ॥३५॥

गृह्या मता यदि वयं वचनं मदीयम्
तच्चेतसाऽपि कुशलाः खलु मोच्चरिध्वम् ।
किं साधुदर्शितपथातिगता भजन्ति
नैःश्रेयसीमहृदयालुतया निजाशाम् ॥३६॥

यदि वयं मुनयो गृह्याः मान्या मताः युष्माकमिति शेषः। तर्हि हे कुशलाः! मम नारायणस्येदं वचनं चेतसाऽपि मा उच्चरिध्वं नोल्लङ्घ्य गच्छत। 'उदश्चरः' इत्यात्मनेपदम्। माङि लुङ्। तथाहि अहृदयालुतया हठेनेति यावत्। साधुसंदर्शितपथात् अतिगता उच्चरिताः जनाः नैःश्रेयसीं निःश्रेयससम्बन्धिनीं निजाशां आत्मनोऽभीष्टां दिशं भजन्ति प्राप्नुवन्ति किम्। नेत्यर्थः ॥ ३६ ॥

**हित्वा तृणानि परशस्यरसाय मत्ता**
**या जर्गृधीति तुरगी स्फुरदोष्ठबिम्बम्।**
**सा नैकधाऽधिपतिनाऽवहितेन बाढम्**
**जङ्घन्यते शिरसि दण्डनिपातनेन ॥ ३७ ॥**

मत्ता चातुर्य्यगर्विता या तुरगी अश्वा तृणानि तृणभक्षणं हित्वा त्यक्त्वा परशस्यरसाय परकीयक्षेत्रधान्यचर्वणाय स्फुरन् ओष्ठबिम्बो यस्मिन्कर्मणि तद् यथा स्यात्तथा जर्गृधीति अतिशयेन गर्धते लुभाति। सा तुरगी बाढमवहितेन शस्यरक्षणार्थं सावधानेनाऽधिपतिना क्षेत्रपतिना शिरसि दण्डनिपातनेन नैकधाऽनेकधा जङ्घन्यतेऽतिशयेन ताड्यते। अप्रस्तुतप्रशंसा ॥ ३७ ॥

**तामुर्वशीं सुमनसां ललनाललाम**
**स्वर्गैकभूषणमिमां तदुपाहरध्वम्।**
**प्रेमास्पदं भवथ भो वसुधावतीर्णाः**
**कालेन कार्य्यगुरुतामनुरुन्धतो मे ॥ ३८ ॥**

तत् तस्मात् ललनाललाम स्त्रीजातरत्नम् अतएव स्वर्गैकभूषणं स्वर्गस्य मुख्यालङ्कारभूतां तामिमां मदूरुसंभवां उर्वशीं सुमनसामिन्द्रस्य। आदरार्थे बहुवचनम्। उपाहरध्वमुपहारीकुरुत। कः पुनरस्माकं त्वद्दर्शनाल्लाभः लाभ एवेत्याह—प्रेमास्पदमिति।

कालेनाऽल्पेनैव समयेन वसुधावतीर्णाः गोपाङ्गनारूपेण भुवमवतीर्णाः यूयं कार्य्यगुरुतामनुरुन्धतः कार्य्यगौरवेण धृतावतारस्य कृष्णस्य मे प्रेमास्पदं प्रेमपात्रं भवथ भविष्यथ । वर्तमानसामीप्ये लट् ॥ ३८ ॥

इति लम्भितशासनाः शफोरू-
सचिवैस्तां फलिनश्रमां गृहीत्वा ।
अतिपट्वितमाः परावृतन् ताः
प्रणताश्चानुपुरन्दरीयधामम् ॥ ३९ ॥

इति लम्भितं ग्राहितं शासनमाज्ञा याभिस्ताः अतिपट्वितमाः सुपटुतमाः । 'घरूपकल्प–' इति ह्रस्वः पुंवद्भावविरहश्च । ताः रम्भाद्योऽप्सरसः । फलिनः फलवान् श्रमः इन्द्रकार्य्यसाधनप्रयासो यया तां तथाविधां तामुर्वशीं गृहीत्वाऽऽदाय प्रणताः सत्यः शफोरूसचिवैर्गन्धर्वैः सार्द्धं अनुपुरन्दरीयधामम् इन्द्रपुरं प्राति । कर्मप्रवचनीयलक्षणादव्ययीभावादत्र टच् टेर्लोपश्च । परावृतन् प्रतिनिवृत्ताः ॥ ३९ ॥

अप्सरोवरणनिर्गतस्तदाऽऽ-
नन्दतुन्दिलतया महोक्षवत् ।
आबभौ स च बलाहकोज्झिता-
दीप्तशारदिकसौरबिम्बवत् ॥ ४० ॥

तदाऽप्सरःपरावर्तनकालेऽप्सरोवरणादप्सरोवृतिनिरोधात् निर्गतो मुक्तः स नारायणः आनन्दतुन्दिलतया हेतुना महोक्षवत् महावृषभ इव तथा बलाहकोज्झितो मेघमुक्तोऽतएवाऽऽदीप्तो यः शारदिकसौरबिम्बः शरत्कालीनसूर्य्यमण्डलं तद्वच्चाऽऽबभौ । एतेन निर्विकारचित्तत्वं हार्दिकविषयनिवृत्तिर्वा सूचिता ॥ ४० ॥

अथ नारायणस्य नरस्य च कृष्णार्जुनावतारोपक्रममाह-

विद्यावशम्वदविभाकरसन्निधानात्
कानीनतां सकवचं तमुपेयिवांसम् ।
विद्वान् स वीध्रतरसङ्गरतावकृष्टो
जज्ञे जगज्जनिरजो वसुदेवपत्न्याम् ॥ ४१ ॥

पश्चात्ततो मुनिगुणोत्पलमालभारी
प्रापद्यत प्रथितमध्यमपाण्डवत्वम् ।
सौभाग्यमूर्तिरिव भूवलयस्य पापा-
नभ्यासमित्यजनगीतकथः पृथायाम् ॥ ४२ ॥

इति श्रीसदानन्दकृतौ नरनारायणीये काव्येऽष्टमः सर्गः ॥ ८ ॥

विद्या कुन्त्या परिचर्य्यातोषिताद्दुर्वाससस उपलब्धा देवाराधनी नाम विद्या तस्या वशंवदोऽधीनः विभाकरः सूर्य्यस्तस्य सन्निधानाद् हेतोः सकवचं एकावशिष्टकवचसहितं यथा स्यात्तथा कानीनतां कन्या कुन्ती तदपत्यतां कर्णरूपतामित्यर्थः । उपेयिवांसं प्राप्तवन्तं तं पश्चमसर्गान्तर्गतवृत्तान्तं सूर्यमण्डलविलीनं दानवं विद्वान् ज्ञातवान् जगज्जनिरजोऽपि स नारायणः वीध्रतरसङ्गरतया शुद्धप्रतिज्ञतयाऽवकृष्टः । यद्वा वीध्रतरसंगरतया शुद्धसंग्रामतयाऽवकृष्टः । यद्वा वीध्रतरा आत्मनि भक्त्या विशुद्धाः गोपाङ्गनादयो जनास्तेषां सङ्गे यद् रतं प्रीतिस्तेनाऽवकृष्टः सन् वसुदेवपत्न्यां देवक्यां जज्ञे उत्पेदे ॥ ४१ ॥ ततः पश्चात् नारायणावतरणानन्तरं पापैरनभ्यासमित्या दूरतः परिहरणीयाः ये जना ऋषयस्तैः गीता कथा यस्य सः । मुनिगुणा वशित्वादयः त एवोत्पलानि तेषां या माला तां बिभर्तीति तथोक्तो नरोऽपि । अत्र भारिशब्दनिमित्तकं मालाशब्दस्य ह्रस्वत्वम् । भूवलयस्य सौभाग्यमूर्तिरिव

पृथायां कुन्त्यां प्रथितमध्यमपाण्डवत्वमर्ज्जुनत्वं प्रापद्यत प्राप्तवान् ॥ ४२ ॥

इति श्रीसदानन्दसूनुवाणीविलासकृतायां दिग्दर्शिनीसमाख्यायां नरनारायणीयव्याख्यायामष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ।

बिभ्रदभ्ररुचिरोऽप्यनात्मजा-
भीरभूपभवनप्रदीपताम् ।
बाल एष निपुणो यशोदया-
लङ्कृतोऽपि निजघान पूतनाम् ॥ १ ॥

अभ्ररुचिरोऽपि मेघवत्कृष्णवर्णोऽपि अनात्मजस्याऽपुत्रस्याऽऽभीरभूपस्य गोकुलाधिपतेः नन्दस्य भवने प्रदीपतां दीपकतुल्यताम् बिभ्रत् बालोऽपि निपुणः एष वसुदेवनन्दनः यशोदयाभ्यामलङ्कृतोऽपि यशोदया स्वमात्रा वाऽलंकृतः पूतनां कंससहितां बालघातिनीं दानवीं निजघान हतवान् । विरोधाभासोऽलङ्कारः । रथोद्धतावृत्तम् ॥ १ ॥

शैशवेऽर्धविनिमीलितेक्षणै-
स्तर्णकै रसितपाणिपल्लवः ।
बल्लवीगणगताप्सरोदृशा-
मुत्सवः स किल गोकुले वसन् ॥ २ ॥

शैशवे गोकुले वसन् स कृष्णः तर्णकैर्गोवत्सैरर्धविनिमीलितेक्षणैः सद्भिः प्रेमानुभावोऽयम् । रसितपाणिपल्लवः जिह्वया लेलिह्यमानकरकिसलयोऽतएव बल्लवीगणे गोपीगणे गता अवतीर्णा

याः अप्सरसः तासां या दृशो दृष्टयस्तासामुत्सवः आसीत् किल ॥ २ ॥

मातुरङ्कनिहितः स्तनन्धयः
पुण्डरीकनयनो विदिद्युते ।
सर्वलोकदुरितान्धकारभिद्
द्यां गतः कुमुदबान्धवो यथा ॥ ३ ॥

मातुरङ्कनिहित उत्सङ्गस्थापितः स्तनन्धयोऽपि पुण्डरीकनयनोऽतएव सर्वलोकदुरितान्धकारभित्कृष्णो द्यां गतः आकाशोत्सङ्गस्थः कुमुदबान्धवश्चन्द्रो यथा विदिद्युते शुशुभे । उपमा ॥३॥

मन्दमन्दहसनः स लीलया
कुन्दकान्तदशनो मनोहरः ।
भङ्गुरभ्रमरकान्तचुम्बिनां
देहगेहविरतिं व्यरीरचत् ॥ ४ ॥

लीलया हेतुना मन्दं मन्दं हस्यतेऽनेनेति मन्दमन्दहसनः अतएव कुन्दात् तदाख्यात् पुष्पादपि कान्ताः स्पृहणीया दशना दन्ता यस्य सोऽतएव मनोहरः स कृष्णाख्योऽर्भकः । भङ्गुराः कुटिला ये भ्रमरकाः ललाटकुन्तलास्तदन्तचुम्बिनां स्नेहादिति भावः । एवंविधानां नन्दादीनां देहगेहविरतिं देहगेहादिविस्मृतिं व्यरीरचत् कृतवान् ॥ ४ ॥

कोमलं स नवनीतमुत्तमं
केवलं चटुलदृग् व्यचूचुरत् ।
गोपितं न खलु गोपयोषितां
मानसञ्च हृदयङ्गमच्छविः ॥ ५ ॥

चटुलदृग् हृदयङ्गमच्छविः स कृष्णः गोपयोषितां व्रजबालानां गोपितं तद्भयात् सुरक्षितं कोमलमुत्तमं नवनीतमेव केवलं न व्यचूचुरत् किन्तु मानसं चेतोऽपि व्यचूचुरत् चोरयामास ॥५॥

श्रूयमाणशुषिरस्वनोद्गमः
स्तब्धकर्णनयनं सतर्णकैः ।
प्रस्नुतैः प्रियतमैर्गवां गणै-
र्बल्लवैश्च गिरिमूर्ध्नि संहतैः ॥ ६ ॥

सतर्णकैः सवत्सैः अतएव प्रस्नुतैः स्निग्धैः गिरिमूर्ध्नि संहतैः गोवर्धनोपरि पुञ्जितैः प्रियतमैर्गवां गणैर्बल्लवैर्गोपालैश्च स्तब्धकर्णनयनं यथा स्यात्तथा श्रूयमाणः शुषिरस्वनोद्गमो वंशीनिनादोदयो यस्य स तथोक्तश्च क्वचिदिति शेषः ॥ ६ ॥

बद्धबर्हमुकुटेन कण्ठतो
लम्बमानवनमालया क्वचित् ।
वेणुना निजवनस्फुटश्रियं
कुञ्जपुञ्जमनुरञ्जयञ्जनैः ॥ ७ ॥

क्वचित् बद्धबर्हेण संसक्तपिच्छेन मुकुटेन तथा कण्ठतो लम्बमानया वनमालया च वेणुना चोपलक्षितः निजवने वृन्दावने स्फुटा श्रीर्यस्य तं एवंविधं कुञ्जपुञ्जं जनैर्गोपजनैः सार्धं अनुरञ्जयन् हर्षयन्नाऽऽसीत् स इति पूर्वतः ॥ ७ ॥

दानवक्रथनलब्धरूढिना
रोदसीपरिगतः स्वतेजसा ।
ऐन्दवोऽप्यरुणतां प्रपेदिवान्
कृष्ण एव जगतीतलस्थितः ॥ ८ ॥

दानवानां अघबकादीनां क्रथनेन दमनेन लब्धा रूढिर्येन तेन स्वतेजसा स्वधाम्ना रोदसीपरिगतो द्यावाभूम्योरभिव्याप्तः एष कृष्णः ऐन्दवश्चन्द्रकुलोत्पन्नोऽपि जगतीतलस्थितोऽपि कृष्णः श्यामवर्णोऽपि अरुणतां सूर्यतां प्रपेदिवान् प्राप्तः। विरोधाभासोऽलङ्कारः ॥ ८ ॥

यामुनं तटमुपेयिवान् क्वचि-
ल्लीलया स नवनीरदच्छविः।
रोचनानिकषपिङ्गमम्बरं
धारयन्नहिफटानटो बभौ ॥ ९ ॥

क्वचित् रोचनानिकषपिङ्गं अम्बरं वस्त्रं धारयन् तद्धारणशीलः। तृन्। स्वयं नवनीरदच्छविः स कृष्णः लीलया यामुनं तटमुपेयिवान् प्राप्तोऽहिफटानटः कालियनागफणानर्तकः सन् बभौ शुशुभे ॥ ९ ॥

तत्त्रिकाततनमूर्छितस्वनं
चञ्चलाचरितरासमण्डलम्।
यामुनं पुलिनमाबभौ क्वचित्
कृष्णमेघबहुलं नभो यथा ॥ १० ॥

क्वचित् तेषां नृत्यगीतवाद्यानां यत् त्रिकं तस्याऽऽततनेन विस्तृत्या मूर्छितः स्वनः शब्दो यत्र तत् चञ्चलाभिर्व्रजाङ्गनाभिर्विद्युद्भिश्च चरितं रासमण्डलं यत्र तत् कृष्णमेघबहुलं यामुनं पुलिनं नभो यथाऽऽकाशमिवाबभौ ॥ १० ॥

राधिकारचितमालया समं
तत्कबाहुलतया च वेष्टितः।
वेणुना कलरवेण चुम्बित-
श्चैतदीयवदनेन निर्जने ॥ ११ ॥

राधिकारचितमालया तस्या राधाया बाहुलतया च समं युगपत् वेष्टितो वेष्टितकण्ठः तथा कलरवेण वेणुना एतदीयवदनेन राधामुखेन च क्वचिन्निर्ज्जने विविक्ते समं चुम्बितश्चुम्बिताधरश्चाऽऽसीदित्यर्थः ॥ ११ ॥

नव्यगव्यदधितक्रकूर्चिका-
प्रायिकैर्मसृणतेमनैर्मनः ।
मातरौ हि रमयाम्बभूवतू
रौहिणेयसहितस्य गोष्वधि ॥ १२ ॥

नव्यं यद् गव्यं दाधि तक्रञ्च तत्सम्बन्धिनी कूर्चिकैव प्रायिका प्रायोभवा यत्र तैरेवंविधैर्मसृणतेमनैः स्निग्धभोजनैः करणैः मातरौ यशोदारोहिण्यौ कर्त्र्यौ गोष्वधि गवामधीशस्य रौहिणेयसहितस्य बलभद्रसहितस्य कृष्णस्य मनो रमयाम्बभूवतुः ॥ १२ ॥

लीलया कुवलयाख्यहस्तिनो
घर्षणोऽतिघनमल्लधर्षणः ।
हर्षणो दिविषदामसौ ससं-
कर्षणोऽतिमदकंसकर्षणः ॥ १३ ॥

ससंकर्षणः सबलदेवः असौ कृष्णः, लीलया कुवलयाख्यस्य कुवलयापीडस्य हस्तिनो घर्षणो संघर्ष्य मारयिताऽथ च घनमतिक्रान्ता घनादपि कठोरा ये मल्लाः चाणूरमुष्टिकादयस्तेषां धर्षणो दमयिताऽथ चाऽतिमदश्चाऽसौ कंसस्तस्य कर्षणः आकृष्य मारयिताऽतएव दिविषदां देवानां हर्षणो हर्षावहो बभूव ॥ १३ ॥

पादपद्मपतितं नवाम्बुद-
श्यामलं चिरसमुत्सुकात्मजम् ।
उग्रसेनकृतयादवाश्रियं
देवकीस्रुतपयोधराऽसिचत् ॥ १४ ॥

ततश्चोग्रसेने कृता यादवश्रीर्यदुकुलराजलक्ष्मीर्येन तं ततश्च पादपद्मपतितं मातुश्चरणकमलप्रणतं नवाम्बुदश्यामलं आत्मजं कृष्णं कर्मपदम् । चिरसमुत्सुका चिरेण पुत्रस्नेहातुराऽतएव स्नुतपयोधरा प्रद्रुतस्तनकलशा देवकी असिचत् दुग्धोदबिन्दुभिरभिषिक्तं चकारेति भावः । परोपकर्तुरन्यः कश्चिदुपकर्तेति ध्वनिः ॥ १४ ॥

पूर्वजोद्धृतमहाभिषेकतां
सन्न्यवारयदिवाऽऽत्मजन्मनः ।
मूर्ध्नि शं पतदुपानतस्य तद्
देवकीदयितनेत्रजं जलम् ॥ १५ ॥

तत्पुत्रस्नेहहेतुकं देवकीदयितनेत्रजं वसुदेवनयनोत्थं शं मङ्गलं जलमश्रुजलं उपानतस्य चरणावनम्रस्याऽऽत्मजन्मनः पुत्रस्य कृष्णस्य मूर्ध्नि शिरसि पतत् स्रवत् पूर्वजोद्धृतमहाभिषेकतां ययातिशापापनोदितराज्याभिषेकतां सन्न्यवारयदिव । राज्याभिषेकप्रतिबन्धकं ययातिशापमपानुदद्दिवेत्यर्थः ॥ १५ ॥

भूरिमागधबलौघमापिबन्
तृप्तिमाप न दुरापपद्धतिः ।
यः स एव मुचुकुन्दकन्दरो-
त्सङ्गभूतशरणोऽरिविद्रुतः ॥ १६ ॥

यः कृष्णः भूरिमागधबलौघमलघुजरासन्धसैन्यप्रवाहं आपिबन्नपि तृप्तिं नाऽऽप । दुरापपद्धतिर्दुर्लभमार्गः स एव कृष्णोऽन्यदाऽरिविद्रुतः कालयवनानुप्रयातः सन् मुचुकुन्दकन्दरोत्सङ्गभूतशरणोऽभवत् । कालो बलीयानिति भावः ॥ १६ ॥

द्वारकामुदधिमेखलामवन्
स त्रिधामप्रतिमामिवाऽपराम् ।

व्यस्मरत् किमु महामना मना-
गप्यहो विमलघोषगोकुलम् ॥ १७ ॥

उदधिमेखलां समुद्रपरिखां द्वारिकां अपरां त्रिधामप्रतिमां त्रिलोकीप्रतिकृतिमिवाऽवन् पालयन् महामना उदारचेताः स कृष्णः विमला विशिष्टगोमया घोषा आभीरपल्ल्यो यत्रैवंविधं यद् गोकुलं व्रजस्तत् मनागीषदपि व्यस्मरत् विस्मृतवान् किमु नाहो इत्यर्थः ॥ १७ ॥

रुक्मिणीमुखविलासिनीगणैः
स्निग्धमुग्धकुलवृद्धबान्धवैः ।
लालितस्य किल नन्दगोकुलो-
त्कण्ठया नयनमाप्लुतं बभौ ॥ १८ ॥

रुक्मिणीमुखविलासिनीगणैस्तथा स्निग्धमुग्धकुलवृद्धबान्धवैर्लालितस्याऽपि कृष्णस्य नयनं नन्दगोकुलोत्कण्ठयाऽऽप्लुतं अश्रुप्लुतं सद् बभावेव ॥ १८ ॥

तुम्बुरुप्रमुखदिव्यगानतः
प्रीतिमाप न तथा सभानतः ।
वैणवैः स गिरिकुञ्जसंश्रितः
प्राग्रवैः सुरभिहुंकृतैर्यथा ॥ १९ ॥

प्राक् पूर्वस्मिन् काले गिरिकुञ्जसंश्रितः स कृष्णः यथा वैणवैः रवैर्गोपानां वेणुशब्दैः सुरभिहुंकृतैर्गोकुलगवीहुंकारैश्च प्रीतिमाप तथाऽद्य द्वारिकायां सभानतः सुधर्म्मास्थितः तुम्बुरुप्रमुखदिव्यगानतोऽपि प्रीतिं नाऽऽप ॥ १९ ॥

तत्कदम्बनिकुरम्बकं स्मरन्
पारिजातमपयातमन्तरात् ।

गर्विताभवनभूषणं व्यधाद्

हन्त हार्दमहिमा विलक्षणः ॥ २० ॥

तद् गोकुलीयं कदम्बनिकुरम्बकं कदम्बसमूहं स्मरन् कृष्णः गर्विताभवनभूषणं सत्यभामागृहाङ्गणालंकारं पारिजातं कल्पवृक्षं अन्तरान्मनस्तोऽपयातं अपगतं व्यधात् कृतवान् तथा हि हार्दमहिमा प्रेममहिमा विलक्षण एव । हन्तेति हर्षे ॥ २० ॥

द्वारकामधिवसन् सदेहत-

श्चेतसा व्रजमयो व्यराजत ।

स व्रजो हरिमयो द्वयोरपि

योगकारणमभूद्वियोगिता ॥ २१ ॥

देहतो द्वारकामधिवसन् स कृष्णश्चेतसा तु व्रजमय एव व्यराजत । स व्रजोऽपि चेतसा हरिमय एव व्यराजत । इत्थं द्वयोरपि हरिव्रजयोर्वियोगिता विश्लेषः योगकारणं परस्परसंश्लेषहेतुरभूत् ॥ २१ ॥

येन सप्त दिवसानि लीलया

ऽधारि भूधरवरोऽतिधीरया ।

नाऽशकत् स गुरुबान्धवाल्पको-

पायनोत्थसुखभारमात्मनि ॥ २२ ॥

येन कृष्णेनाऽतिधीरया लीलया शैशवे भूधरवरो गोवर्धनाचलः सप्त दिवसानि सप्तादिनपर्य्यन्तं अधारि धृतः । सोऽद्य यौवने गुरुबान्धवाल्पकोपायनोत्थसुखभारं सुदामोपाहततण्डुलमुष्टिजनितानन्दातिशयभारमात्मनि वोढुं नाऽशकत् ॥ २२ ॥

भावपुष्पफलपत्रफुल्लदृक्

यो ददात्यविकलां श्रियं स्वयम् ।

चेदिराडसहनो महामखे
द्रुह्यति स्म किल विश्वबन्धवे ॥ २३ ॥

भावेन पुष्पैः फलैः पत्रैश्च फुल्ला हर्षिता दृक् दृष्टिर्यस्य स एवंविधो यः कृष्णः स्वयं याचितं विनैवाऽविकलां श्रियं ददाति भक्तेभ्य इति शेषः । महामखे युधिष्ठिरराजसूयेऽसहनस्तत्पूजासहिष्णुः चेदिराट् शिशुपालः तस्मै विश्वबन्धवे कृष्णाय द्रुह्यति स्म । किलेत्यैतिह्ये ॥ २३ ॥

चिच्छिदे दशशतारकैतवा-
त्तस्य शीर्षमसहिष्णुतैव सा ।
अन्यथा कथमिहाऽस्य जागृयात्
सत्सु सर्वसमता जगत्पितुः ॥ २४ ॥

सा तादृशी असहिष्णुतैव दशशतारकैतवात् कृष्णचक्रव्याजेन तस्य शिशुपालस्य शीर्षं शिरश्चिच्छिदे चकर्त । अन्यथोक्तवैपरीत्ये जगत्पितुरस्य कृष्णस्य सर्वसमता सत्सु कथं जागृयात् । कथमपि नेत्यर्थः ॥ २४ ॥

धर्म्यधुर्य्यजनतासमीक्षणे
व्याप्रियेत यदि नाऽस्य लोचनम् ।
तत्कथं बहुविपत्तिमोचनं
प्राप्नुयुः सपदि पाण्डुनन्दनाः ॥ २५ ॥

यदि चेदस्य कृष्णस्य लोचनं धर्म्यधुर्य्यजनतासमीक्षणे न व्याप्रियेत तर्हि पाण्डुनन्दनाः पाण्डवाः सपदि बहुविपत्तिमोचनं कथं प्राप्नुयुः नैवेत्यर्थः ॥ २५ ॥

यत्सनातनमनेन वाङ्मनः-
कर्मभिः परमसख्यमीयिवान् ।

फाल्गुनः स्वकरकीर्तिमुज्ज्वला-
मासदद्द्रुपदराजनन्दिनीम् ॥ २६ ॥

यत् यस्मात् फाल्गुनोऽर्जुनः अनेन कृष्णेन सह वाङ्मनःकर्मभिः सनातनं नित्यं परमसख्यमीयिवान् प्रापत् तेनैव कारणेन उज्ज्वलां स्वकरकीर्तिं तद्रूपां द्रुपदराजनन्दिनीं द्रौपदीमासदत् लब्धवान् । स्वकरकीर्तिशब्देन लक्ष्यभेदनलाघवं द्योतितम् ॥२६॥

यद्धनञ्जयपदं प्रपेदिवान्
दुर्भराजिषु च सव्यसाचिताम् ।
यच्च धर्मतनयाध्वरोद्वह-
प्रौढिमेष तदनुग्रहोदयः ॥ २७ ॥

एषोऽर्जुनः यत् धनञ्जयपदं प्रपेदिवान् उत्तरान् कुरून् विजित्य प्रभूतं धनं लेभे इत्यर्थः । यच्च दुर्भराजिषु महारणेषु सव्यसाचितां प्रपेदिवान् । यच्च धर्मतनयाध्वरोद्वहप्रौढिं युधिष्ठिरराजसूयानिर्वाहकचातुर्य्यं प्रपेदिवान् एष कार्य्यत्रयसिद्धिहेतुकस्तदनुग्रहोदय एव कृष्णानुग्रहविजृम्भ एव ॥ २७ ॥

तद्यशःकुसुमकर्ममालिक-
स्तत्सदःसदनवर्धकिर्हरिः ।
पाणिघो विजयकर्मसु स्वयं
सर्वकार्य्यसहता हि मित्रता ॥ २८ ॥

तस्याऽर्जुनस्य यशःकुसुमकर्मसु विषये मालिको मालाकारस्तथा तस्याऽर्जुनस्य सदःसदनवर्धकिः सदोगृहनिर्माणकारुः तथा विजयस्याऽर्जुनस्य कर्मसु रणविजयादिषु स्वयं पाणिघो हस्ततलदायी हरिः कृष्ण एवाऽऽसीत् । तथाहि मित्रता सर्वकार्यसहतैव २८॥

द्रौपदीप्रहितचित्रतन्त्रिका
प्रेमविद्युदभिगर्भसम्भृताम् ।

शुश्रुवान् पुरि तदुत्तरं ददौ
ह्रीविपत्तिपरिरक्षणं क्षणात् ॥ २९ ॥

प्रेमविद्युत् शुद्धभक्तिसौदामनी सैवाऽभिगर्भं सम्भृता यस्यास्तां द्रौपदीप्रहितचित्रतन्त्रिकां दुःशासनेन वसनाकर्षणकाले द्रौपदीसमीरितविचित्रतन्त्रीप्रवृत्तिं तत्प्रेषिततारसमाचारमित्यर्थः । पुरि द्वारिकायां शुश्रुवान् श्रुतवान् हरिः क्षणात् शीघ्रमेव ह्रियो लज्जायाः विपत्तितः परिरक्षणमेव तदुत्तरं द्रौपदीप्रतिवाक्यं ददौ ॥२९॥

द्यूतकैतवमधिष्ठितैर्यदाऽऽ-
च्छिन्नराजककुदा निकारिताः ।
पाण्डवाः प्रतिवनं चरिष्णव-
स्तं तदापि विजहुर्न चेतसा ॥ ३० ॥

यदा पाण्डवाः द्यूतकैतवं दुरोदरच्छलमधिष्ठितैर्दुर्योधनादिभिराच्छिन्नराजककुदा अपहृतछत्रचामरादयः सन्तो निकारिता विवासितास्तदा तस्मिन् कालेऽपि प्रतिवनं चरिष्णवस्ते तं कृष्णं चेतसा न विजहुः तमेव शरणं जग्मुरित्यर्थः ॥ ३० ॥

निर्वनोषितमसौ शमास्पदं
कर्णशल्यसचिवः सुयोधनः ।
तं यदा प्रति ददौ न धर्मतो
दायभागमपतत्तदाऽन्तरे ॥ ३१ ॥

निर्वाहितं वनोषितं वनवाससमयो येन तं शमास्पदं शान्त्याश्रयं तं युधिष्ठिरं प्रति यदा कर्णशल्यसचिवः सुयोधनो दायभागं पैतृकधनभागं न ददौ तदाऽपि असौ कृष्ण एव धर्मतोऽन्तरे तदुभयमध्येऽपतत् दायभागप्रदानायेति भावः ॥ ३१ ॥

सन्निकृष्टविपदां न रोचते
पथ्यमेतदिह तथ्यमेव तत् ।

तप्ततैलमिव शान्तिसेचनै-
स्तत्कृतैर्भृशमदीपि तन्मनः ॥ ३२ ॥

सन्निकृष्टविपदामासन्नविपत्तीनां जनानां इह पथ्यं न रोचते तदेतत् तथ्यं सत्यमेव । अर्थान्तरं न्यस्यति–तत्कृतैः कृष्णकृतैः शान्तिसेचनैः तन्मनो दुर्योधनचित्तं तप्ततैलमिव भृशमत्यन्तमदीपि उज्जज्वाल ॥ ३२ ॥

बोधितोऽपि किल तेन यद्विना
दित्सति स्म कणमात्रमप्यसौ ।
तन्महारणपराङ्मुखं मुहं
पार्थसारथिरिति व्यजिज्ञपत् ॥ ३३ ॥

तेन कृष्णेन बोधितोऽपि सुयोधनः यं महारणं विना कणमात्रमपि न दित्सति स्म दातुमैच्छत् । मुहं पितृव्यपितामहगुर्वादिबन्धुविनाशजन्यव्यामोहाकुलमतएव तस्मान्निर्दिष्टात् महारणात्पराङ्मुखं विमुखमर्जुनं पार्थसारथिः कृष्ण एव इति वक्ष्यमाणप्रकारेण व्यजिज्ञपत् बोधयामास । व्यामोहनिरासायेति भावः ॥३३॥

वार्य्यतां मलजवोऽयमीदृशः
श्रीकरग्रहविलग्नकालजः ।
पौरुषं वितनु योगवान् भव
ह्यन्यथाऽपयशसा नियुज्यसे ॥ ३४ ॥

हे सखे ! श्रीकरग्रहविलग्नकालजः समरविजयलक्ष्मीपाणिग्रहणलग्नवेलासमुत्थोऽयमीदृशो रणपराङ्मुखतारूपो मलजवः पुरीषवेगो वार्य्यताम् कथमपि निरुध्यताम् । हि पौरुषं वितनु योगवान् भव । अन्यथाऽपयशसा नियुज्यसे नियुक्तो भवसि ॥ ३४ ॥

एकतोऽतिजवना महानदी
सा दुरूहसलिलाऽन्यतः स्थिरा ।

अन्तरालपथपातिनोऽखिलाः
स्वप्न ईदृगुपधारयाऽऽत्मनि ॥ ३५ ॥

एकतः संसाराटवीमार्गस्यैकपार्श्वतोऽतिजवना महावेगगामिनी महानदी कालनदीत्यर्थः । वहतीति शेषः । अन्यतो द्वितीयपार्श्वतो दुरूहसलिला दुर्वितर्कजला साऽनिर्वचनीया महानदी स्थिरा सरःस्वरूपेत्यर्थः । उभयतोऽपि दुस्तरेति भावः । तथाऽन्तराले उभयनदीमध्ये यः पन्थाः स्थलमार्गोऽतिकृशस्तत्र पतन्ति गच्छन्ति ते तथाविधाः अखिला लोकाः सन्ति । ईदृगेषोऽपि स्वप्न एव । इत्थमात्मन्युपधारय । 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति निगमः ॥ ३५ ॥

गौरुदर्यदहनेन शाद्वलं
वत्सलं स्वमपहाय सत्वरा ।
मोहतो महदरण्यमाश्रिता
दिग्भ्रमात्तमनुशोचति स्वयम् ॥ ३६ ॥

गौर्मतिरूपा स्वं वत्सलं वत्सं उदर्यदहनेन बुभुक्षाग्निना हेतुनाऽपहाय त्यक्त्वा सत्वरा महदरण्यं आश्रिता । तत्राऽपि मोहतो दिग्भ्रमात्स्वयं तं वत्समनुशोचति । 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥' इति निगमः ॥ ३६ ॥

कोऽहमाकलय वस्तुतो हृदि
किंनिमित्तजननः क्व मे स्थितिः ।
का स्वकर्मपटुतेत्यनारतं
ह्यापदां पदमनात्मवेदिता ॥ ३७ ॥

वस्तुतो याथार्थ्येन कोऽहं, किंनिमित्तजननः, क्व मे स्थितिः, का मे स्वकर्मपटुतेत्यनारतं नित्यं हृदि आकलय विचारय । हि

यतः अनात्मवेदिताऽऽपदां पदं भवति । 'ऋते ज्ञानान्न मुक्तिः' इति निगमः ॥ ३७ ॥

योऽचुकुस्मत महासभान्तरे
द्रौपदीं प्रति विकर्षिताम्बराम् ।
स त्वयाऽद्य शरतूणिताननः
सानुतापनिधनेन शिक्ष्यताम् ॥ ३८ ॥

यः कर्णः महासभान्तरे कौरवद्यूतसभामध्ये विकर्षिताम्बरां दुःशासनाकृष्टवसनां द्रौपदीं प्रति अचुकुस्मत कुत्सितस्मयनं चकार । कुस्म कुत्सितस्मयने चुरादिः । स कर्णोऽद्य त्वया शरतूणिताननः शरपूरितवक्त्रः सन् सानुतापनिधनेन सपश्चात्तापमरणेन द्वारा शिक्ष्यतां शिक्षितो भवतु ॥ ३८ ॥

आत्मनस्तरतु सत्यसङ्गरो
भीम एष किल सङ्गरार्णवम् ।
माऽफलावुरगराजभीषणौ
तद्गिगाहनपटू च तद्भुजौ ॥ ३९ ॥

सत्यसङ्गरः सत्यप्रतिज्ञ एष भीमः आत्मनः सङ्गरार्णवं दुर्योधनदुःशासनवधप्रतिज्ञासमुद्रं तरतु किल । उरगराजभीषणौ तद्गिगाहनपटू तद्भुजौ भीमसेनबाहू च अफलौ निष्फलौ मा स्याताम् । त्वयि रणपराङ्मुखे सति भीमोऽप्युदासीनो भविष्यतीति भावः ॥ ३९ ॥

शत्रुलुञ्चितमहाकचोच्चय-
स्तद्दुकूलपटलान्तसन्दितः ।
शल्यसङ्ग इव संह्रियेत स
हृद्गतो मृगदृशः शरोत्करैः ॥ ४० ॥

मृगदृशो द्रौपद्याः शत्रुलुञ्चितमहाकचोच्चयो दुःशासनाकर्षणोच्छिन्नशिरोरुहपुञ्जः तया द्रौपद्या दुकूलपटलान्ते सन्दितो मृतो युष्माकमुत्तेजनार्थमिति भावः । स हृद्गतो मनसि निगूढः शल्यसंघ इव शरोत्करैः संहियेत निष्कास्यताम् । शल्यान्तरेण शल्यनिष्कासनं प्रसिद्धमेव ॥ ४० ॥

एवमादिभिरपारवाङ्मयै-
नोंदितः स समराय निश्चितः ।
उत्पथादपि च लब्धसत्पथो
वासरं स्थितपदो वरं नरः ॥ ४१ ॥

एवमादिभिरित्यादिभिः अपारवाङ्मयैर्बह्वर्थकशास्त्रैर्नोदितः प्रेरितः सोऽर्जुनः समराय युद्धं कर्तुं निश्चितः कृतनिश्चयो बभूव । अर्थान्तरं न्यस्यति–वासरं समस्तं दिनं उत्पथात् उत्पथगमनाद्धेतोः स्थितपदः क्लान्तपादोऽपि नरः लब्धसत्पथः सायंकालेऽपि प्राप्तसन्मार्गः सन् वरं ईषत्प्रियः ॥ ४१ ॥

अथ कुलकेन युद्धं वर्णयति–

अथाऽऽहिताहीन्द्रहिमांशुमूर्धभि-
र्धृते द्रढिम्ना वसुधातले तथा ।
विभिद्यमानेऽभ्रतले मुहुर्मुहुः
प्रवीरशङ्खध्वनिभिः पृथक् पृथक् ॥ ४२ ॥

अथाऽर्जुननिश्चयानन्तरं वसुधातले आहितः समाहितश्चाऽसावहीन्द्रहिमांशुः शेषनागचन्द्रः तस्य मूर्धभिः शिरोभिः द्रढिम्ना दार्ढ्येन धृते सति तथाऽभ्रतले आकाशतले पृथक् पृथक् मुहुर्मुहुः प्रवीरशंखध्वनिभिर्विभिद्यमाने सति ॥ ४२ ॥

नदन्नवाम्भोधरधीरनादिषु
रथेषु चामीकरचारुकान्तिषु ।

धनुर्गुणध्वानविकम्प्रकातरे
रणे प्रवृत्ते मदमत्तवारणे ॥ ४३ ॥

चामीकरचारुकान्तिषु सुवर्णसदृशोज्ज्वलकान्तिषु रथेषु स्यन्दनेषु नदन्नवाम्भोधरधीरनादिषु सत्सु तेषु प्रचलत्सु इत्यर्थः । अथ च धनुर्गुणध्वानविकम्प्रकातरे मदमत्तवारणे रणे प्रवृत्ते सति ॥ ४३ ॥

निकृत्तबाहूरुशिरःशिरोधरा-
किरीटकेयूरतनुत्रकुण्डले ।
प्रवृत्तरक्तौघनदीभयङ्करे
रणाङ्गणे चण्डकबन्धताण्डवे ॥ ४४ ॥

रणाङ्गणे युद्धाजिरे निकृत्तानि छिन्नानि बाहूरुशिरःशिरोधराकिरीटकेयूरतनुत्रकुण्डलानि यत्रैवंविधे । तथा प्रवृत्तया रक्तौघनद्या भयङ्करे एवं चण्डं कवन्धताण्डवं यत्रैवंभूते सति ॥ ४४ ॥

पतत्सु वीराभिषगृध्रपत्रिषु
विमुक्तकण्ठं विलपत्सु बन्धुषु ।
असून् विहायाऽमरसुन्दरीजनैः
समागमानन्दचणेषु केषुचित् ॥ ४५ ॥

वीरामिषगृध्रपत्रिषु वीरमांसलुब्धपक्षिषु श्येनादिषु पतत्सु सत्सु तथा बन्धुषु हतबान्धवेषु भ्रातृपित्रादिषु विमुक्तकण्ठं तारस्वरेण विलपत्सु विलापं कुर्वत्सु सत्सु तथा केषुचिद्वीरेषु असून् विहाय युद्धे प्राणान् त्यक्त्वाऽमरसुन्दरीजनैः अप्सरोभिः समं समागमात् य आनन्दः तेन वित्तेषु सत्सु ॥ ४५ ॥

हतेऽभिमन्यौ नवयौवनोन्मदे
ऽर्जुनैकपुत्रे परचक्रभेदिनि ।

जयद्रथे पाशुपतेन संस्थिते
द्रोणे च भीष्मे शरतल्पशायिनि ॥ ४६ ॥

नवयौवनोन्मदे परचक्रभेदिनि शत्रुव्यूहविभेदकेऽर्जुनैकपुत्रे सुभद्रासूनौ अभिमन्यौ हते सति तथा पाशुपतेन पशुपतिदेवताकेन बाणेन जयद्रथेऽभिमन्युहन्तरि संस्थिते निहते सति एवं द्रोणे च संस्थिते सति तथा भीष्मे शरतल्पशायिनि सति ॥ ४६ ॥

अदोमहाभारतजन्यभूरुहो
दुरूहमूलं श्रमकर्शितो नरः।
तमङ्गराजं व्यरुजन्महाभुजः
समूर्जितः श्रीपतिलोचनार्पणैः ॥ ४७ ॥

महाभुजोऽपि श्रमकर्शितस्तदुत्पाटनपरिश्रमक्लान्तः किञ्च श्रीपतेः सारथिभूतस्य कृष्णस्य लोचनार्पणैः नयननिपातैः समूर्जितः सञ्जातबलः नरोऽर्जुनः अदोमहाभारतजन्यं महाभारताख्यं युद्धं तदेव भूरुह् वृक्षः। क्विप्। तस्य दुरूहमूलं दुरुच्छेद्यमूलभूतं अङ्गराजं तं कर्णनाम्ना परिणतं सहस्रकवचं दानवं व्यरुजत् बभञ्ज तं जघानेत्यर्थः ॥ ४७ ॥

कान्ताश्लेषानन्दतो वञ्चिताना-
मुष्णैर्बाष्पैर्दूषितं वीक्ष्य युद्धम्।
शान्त्यै तस्याऽन्ते पशुः सानुबन्धो
मिम्ये पीवा हन्त दुर्योधनाख्यः ॥ ४८ ॥

कान्ताश्लेषानन्दतो वञ्चितानां रणहतभर्तृकाणां विधवानां स्त्रीणामित्यर्थः। उष्णैः शोकोत्थैरित्यर्थः। बाष्पैरश्रुभिः युद्धं दूषितं वीक्ष्याऽन्ते तस्य दोषस्य शान्त्यै सानुबन्धः सावरजः दुर्योधनाख्यः पीवा पशुर्मिम्ये निजघ्ने। यावद्दुर्योधनो न निहन्यते तावदन्येषां निधनं व्यर्थमेव स्यादिति भावः ॥ ४८ ॥

पुत्राञ्छत्रच्छायायाऽऽप्याय्यमानान्
दृष्ट्वा कुन्ती तेन विध्वस्ततापान् ।
प्रेम्णोदञ्चद्रोमराजी पुरस्ता-
दस्तौदेनं गद्गदेन स्वरेण ॥ ४९ ॥

अथ कुन्ती तेन कृष्णेन विध्वस्ततापान् तथा छत्रच्छाययाऽऽप्याय्यमानान् पुत्रान् दृष्ट्वा प्रेम्णोदञ्चद्रोमराजी पुलकितरोमावलिः सती पुरस्तादेनं कृष्णं गद्गदेन स्वरेणाऽस्तौत् ॥ ४९ ॥

नाथे याते स्वस्तलं शापमूढे-
ऽनाथा ह्येते पुत्रका मे वराकाः ।
आशासिष्यन्तेदृशीं किं सुलक्ष्मीं
नाथोऽमीषां चेद्भवान्नाऽभविष्यत् ॥ ५० ॥

शापमूढे नाथे पाण्डौ स्वस्तलं याते सति अनाथा वराका एते मे पुत्रकाः किमीदृशीं सुलक्ष्मीं आशासिष्यन्त नेत्यर्थः । यदि चेत् भवान् अमीषां पाण्डवानां नाथो नाऽभाविष्यत् ॥ ५० ॥

लाक्षागारान्नाथ रक्षोभिभूते-
रन्यायेभ्यः शत्रुसन्दर्शितेभ्यः ।
त्रातानां नस्त्वां हि लोकान्तरेऽपि
त्रातारं भो बान्धवं तर्कयामः ॥ ५१ ॥

हे नाथ ! लाक्षागाराल्लाक्षाभवनदहनात्तथा रक्षोभिभूतेर्हिडिम्बबकादिपराभवात् एवं अन्यान्येभ्यः शत्रुसन्दर्शितेभ्योऽन्यायेभ्यश्च त्रातानां त्वया रक्षितानां नोऽस्माकं लोकान्तरेऽपि त्रातारं रक्षितारं बान्धवं त्वामेव तर्कयामो मन्यामहे ॥ ५१ ॥

तां ते दृष्टिं नित्यकल्याणवृष्टिं
मूर्तिं चेमां सान्द्रधाराधराभाम् ।

चन्द्रोत्कर्षां शुष्कशष्पौघहर्षां
के कल्याणाश्चेतसा विस्मरन्तु ॥ ५२ ॥

नित्या कल्याणवृष्टिर्यस्यास्तां तथोक्तां तामनिर्वचनीयां ते दृष्टिं तथा सान्द्रधाराधराभां नवमेघनिभां चन्द्रोत्कर्षां चाऽतएव शुष्कमपि शष्पौघं हर्षयतीति तथाविधां ते इमां मूर्तिं के कल्याणाः कल्याणबुद्धयः पुरुषाश्चेतसा मनसा विस्मरन्तु न केऽपीत्यर्थः । पाण्डवाः सम्प्रति लब्धराज्या मां विस्मरिष्यन्ति नैतदवधार्य्यमिति भावः ॥ ५२ ॥

इत्युक्त्वाऽसौ प्रेमसंरुद्धकण्ठी
निःषिञ्चन्ती मङ्गलैरश्रुपूरैः ।
दोर्दण्डेन स्नेहभारश्लथेनाऽऽ-
श्लिक्षद्वृद्धा नम्रमूर्धानमेनम् ॥ ५३ ॥

इत्युक्त्वा प्रेमसंरुद्धकण्ठी असौ वृद्धा कुन्ती मङ्गलैरश्रुपूरैः नम्रमूर्धानमेनं कृष्णं निःषिञ्चन्ती स्नेहभारश्लथेन दोर्दण्डेन भुजदण्डेनाऽऽश्लिक्षत् आलिलिङ्ग ॥ ५३ ॥

इति गलितकलङ्कामुच्छशाङ्कां स्वकीर्तिं
श्रवणविषयरम्यां भूतले सन्निधाय ।
गुरुवचनकरोऽयं सर्वलोकप्रतिष्ठोऽ-
व्ययगतिरभिपेदे ब्रह्मलोकप्रतिष्ठाम् ॥ ५४ ॥

इतीत्थं गुरुवचनकरो ब्रह्मणः शासनसम्पादकोऽतएव सर्वलोकप्रतिष्ठोऽव्ययगतिरयं कृष्णः भूतले गलितकलङ्कां निष्कलंकामतएवोच्छशांकां चन्द्रमुत्क्रम्य स्थितां श्रवणविषयरम्याञ्च स्वकीर्तिं सन्निधाय स्वयं ब्रह्मलोकप्रतिष्ठामभिपेदे । गुरुवचनकर्तॄणामीदृशी गतिरिति भावः ॥ ५४ ॥

येषामियं विमलवाङ्मयमाल्यमाला
नारायणोत्तमयशोमकरन्दपूर्णा ।
दामोदरद्विजसुतोद्ग्रथिता प्रयत्नात्
कण्ठे विभाति सुखसम्पदुपैतु तेषाम् ॥५५॥

प्रयत्नाद्दामोदरद्विजसुतोद्ग्रथिता सदानन्दगुम्फिता नारायणोत्तमयशोमकरन्दपूर्णा इयं नरनारायणसम्बन्धिनी विमलवाङ्मयमाल्यमाला येषां पुरुषाणां कण्ठे विभाति शोभिष्यते तेषां सुखसम्पत् उपैतु अभिमुखी भवतु ॥ ५५ ॥

श्रीमद्गजाधरवराग्रजबाहुवल्ली-
छायाश्रितेन कथितं कविकीरकेण ।
श्रीभारतीकरसरोरुहपञ्जरान्त-
र्विभ्राजिना वितनुतात्सुमनोविनोदम् ॥५६॥

श्रीमान् गजाधरो गजाधरनामा यो वराग्रजो ज्येष्ठभ्राता तद्बाहुवल्लीछायाश्रितेन श्रीभारतीकरसरोरुहपञ्जरान्तर्विभ्राजिना कविकीरकेण कविशुकेन कथितमिदं काव्यं सुमनोविनोदं विद्वद्विनोदं वितनुतात् ॥ ५६ ॥

श्रीकीर्तिशाहनृपकीर्तिवितानताने
तन्नन्दने नृपतिचन्द्रनरेन्द्रशाहे ।
देवप्रयागनगरे टिहरीनरेशे
प्राणाय्यदोऽब्धिमुनिगोब्जमिते हि वर्षे ॥५७॥

श्रीकीर्तिशाहनृपकीर्तिवितानताने स्वतातकीर्तिशाहकीर्तिविस्तारके तन्नन्दने श्रीकीर्तिशाहसूनौ नृपतिचन्द्रनरेन्द्रशाहे टिहरीनरेशे टीहरीराज्यं कुर्वति सति देवप्रयागनगरे अब्धिमुनिगोब्जमिते वर्षे १९७४ मिते वर्षेऽदः काव्यं प्राणायि प्रणीतम् मयेति शेषः ॥ ५७ ॥

गढवालदेशतिमलीवसतौ निवसन्नुपाहरन् विद्याम् ।
दुर्धरतरैकपत्नीव्रतवान् सोऽयं सदानन्दः ॥ ५८ ॥

ये त्वल्पकारणपरार्थविदूषणोत्का
भस्मीकरोतु मम ताञ्छ्रमवारिबिन्दुः ।
ते सज्जनाः परपरिश्रममर्मबोधाः
दूर्वासमानमुपयान्तु भुवि प्ररोहम् ॥ ५९ ॥

इति श्रीगुरुचरणारविन्दप्रसादसिद्धकविगढवालदेशीयतिमली-
ग्रामनिवासिडबरालवंशहंसश्रीदामोदरसूनुसदानन्दकृतौ
नरनारायणीये काव्ये नवमः सर्गः ॥ ९ ॥

तान् दुर्ज्जनान् मम ग्रन्थकर्तुः श्रमवारिबिन्दुर्भस्मीकरोतु । विषमालंकारः । सज्जनास्तु भुवि दूर्वासमानं प्ररोहमुपयान्तु इत्याशीः ॥ ५८ ॥ ५९ ॥

इति श्रीसदानन्दसूनुवाणीविलासकृतायां दिग्दर्शिनीसमाख्यायां
नरनारायणीयकाव्यव्याख्यायां नवमः सर्गः ॥ ९ ॥

समाप्तश्चाऽयं ग्रन्थः । शम् ।

---

अशेषभूमण्डलमङ्गलावहं
क्षेत्रं हृषीकेशसमाह्वयं परम् ।
महामहिम्ना हि महातपस्विनां
महीतलेऽद्यापि महीयते यतः ॥ १ ॥

अस्मिन् पृथुश्रीरघुवंशनाथो
विशुद्धसौभ्रात्रजटालमूर्धा ।
सन्दर्शकानां बहुजन्मपाप-
प्रध्वंसनः श्रीभरतो विभाति ॥ २ ॥

विद्यानवद्यचरितः परितः समज्ञो
विद्याप्रियः परशुराम इति प्रसिद्धः ।
तत्क्षेत्रशासनविधौ विधिवद्विनीतो
जागर्ति तत्प्रतिनिधिर्नृपपूजिताङ्घ्रिः ॥ ३ ॥

शोभां दधाति यदिदं सुरलोकतुल्यां
हिंसादिदुश्चरितवर्जितमूर्जितश्रि ।
काले भयङ्करतरेऽपि स एष तस्य
श्रीमन्महन्तमहितस्य महोविजृम्भः ॥ ४ ॥

काव्यं मदीयमिदमुत्तमकीर्तिभूषं
प्रापत् परं हि शरणं प्रथमं तमेनम् ।
के ते न येऽमलधियोऽधिगताः श्रुतानि
सत्काव्यसौरभगुणा मुदिता भवेयुः ॥ ५ ॥

इति शम् ।



